॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
२४९

॥ श्रीः ॥

# ध्वन्यालोकसारः

प्रणेता
श्रीपुरुषोत्तमशर्मा चतुर्वेदः

॥ श्रीः ॥

# हरिदास-संस्कृत-ग्रन्थमाला

२४९

॥ श्रीः ॥

# ध्वन्यालोकसारः


प्रणेता

हिन्दीरसगङ्गाधरादिरचयिता श्रीकाशीनरेशराजपण्डितः

**श्रीपुरुषोत्तमशर्मा चतुर्वेदः**

भू० पू० अजयमेरुस्थराजकुमारविद्यालय(मेयोकालेज)स्य

धर्मसंस्कृतोभयविभागाध्यक्षः


Bhushan




चौखम्बा-संस्कृत-सीरिज, बनारस-१

वि० सं० २०११ ] मूल्यं सपादरूप्यकम् [ ई० १९५४

# प्रास्ताविकं किञ्चित्

## कस्तावदस्योपयोगः ?

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते' इतीदमाभाणकमापामर-पण्डितं सुप्रसिद्धम् । अतएव पर्यनुयुञ्जीरन् प्रेक्षावन्तो यत् प्राञ्जलया प्रशस्तया च भाषया विनिबद्धस्य ध्वन्यालोकस्य विद्यमाने सर्वङ्कषालोचन-चमत्कारिणि 'लोचने', निबद्धेषु निबध्यमानेषु च नवीनेषु टीका-टिप्पण्यनुवादादिषु कोऽस्य सारस्योपयोग इति । तदत्रेदं सविनयं विनिवेदनीयम्—यत् प्रथमतस्तु ते सर्वे संन्दर्भा बहुमूल्याः, प्रौढाः, सुविस्तृताश्चेति साधारणः संस्कृतविद्यार्थी न तत्क्रये प्रभवति, न च भवति तैस्तस्य प्रयोजनसिद्धिरपि । तथाहि—श्रीमदभिनवगुप्तीयं लोचनं यावन्न स्वधीत-साहित्याद् गुरोरधीयेत तावदाधुनिकानां पल्लवग्राहिपाण्डित्यचुञ्चूनां छात्राणां न भवेदेव समुपयोगार्हम् । विस्तृतं च विवरणमेतदिति सर्वेषु परीक्ष्यग्रन्थेषु द्वित्रमासमात्रकृतश्रमाणां परीक्षार्थिनां न वशवर्त्तितामप्युपयाति । सन्ति च तादृशान्यपि स्थलानि तत्र, यानि प्रकाशितेऽपि सुसम्पादिते संस्करणे विदुषामपि विचारणीयानि । यानि चेतराणि तुन्दिलान्यनुवादादीनि प्रकाशितानि तान्यपि न संक्षेपेण वेदनीयनर्थमर्पयन्ति, अपितु जटिलतामेव विदधति । अत्र तु ताः सर्वा अनुपपत्तीः परिहृत्य छात्राणां तथा बोधाय प्रयतितम्, यथा ते सरलया च संक्षिप्तया च भाषयाऽवगन्तव्यमवगच्छेयुः । अर्थस्यास्य स्पष्टप्रतिपत्तये उदाहरणमेकमिहोद्ध्रियते—

'कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरम् ।
सभमर-पउम-ग्घाइणि वारिअवामे सहसु एण्हिम् ॥'

इति पद्ये लोचनेन व्यङ्गविचारो द्वादशतोऽप्याधिकाभिः पङ्क्तिभिर्विहितः। इह तु बोध्यमर्थमपरित्यज्यापि संक्षिप्यार्धाधिकपङ्क्तिद्वयेनैव टिप्पण्यां संगृहीतः। आधुनिकटीकाकारैस्तु 'अत्र संभविनामन्येषां क्रमशो भासमानानां प्रतिवेशि–सपत्नी–नायिकातदुपपति–तटस्थादिविषयकाणां व्यङ्ग्यानां विस्तरभिया वर्णनं पृथङ् न कृतमिति लोचनेनालोचनीयम्'। (दीधिति पृ० २४ नवीन संस्करण) इति विलिख्य सर्वं परिहृतम्। तदेवं विवेकविमलया दृशा सावधानतया पठद्भिर्मर्मज्ञैरुपयोगोऽस्य ज्ञायेतैव। स्वल्पमूल्यता, सुतनुशरीरता चास्य सारस्य छात्रोपयोगाय भवेदेवाभिलषणीयेति किमत्र तिरोहितम्। तेन 'दर्पणमर्पणीयं किं पाणिकङ्कणपरीक्षणकामनायाम्' इत्यभियुक्तोक्तिमनुस्मरता विरम्यते विफलविस्तरात्।

## इदं त्विह निवेदनीयम्

उपक्रम एव येऽभाववादिनां पूर्वपक्षप्रकारा निरूपिताः, तत्र लोचने प्रकारत्रयमेव दृश्यते। उक्तं च विद्वत्सहृदयोभयशिरोमणिभिर्लोचनकारैः—

'तत्राभावविकल्पस्य त्रयः प्रकाराः—शब्दार्थगुणालङ्काराणामेव शब्दार्थशोभाकारित्वात्'.....'शब्दार्थमयस्य काव्यस्य न शोभाहेतुः कश्चिदन्योऽस्ति योऽस्माभिर्न गणित इत्येकः प्रकारः। यो वा न गणितः स शोभाकार्येव न भवतीति द्वितीयः। अथ शोभाकारी भवति तर्ह्यस्मदुक्त एव गुणे वालङ्कारे वान्तर्भवति, नामान्तरकरणे तु कियदिदं पाण्डित्यम्'..... इति तृतीयः प्रकारः।'

तथापि लेखकेनानेनाग्रिमग्रन्थस्य स्पष्टप्रतिपत्त्यर्थं पञ्च प्रकाराः स्वीकृताः—तत्र ध्वनेः स्वरूपे संसाधितेऽपि लोकप्रसिद्ध्यभावरूपो दोषः 'क' 'पक्षे, ध्वनेः प्रवादमात्रत्वं तु 'ङ' पक्षे प्रदर्शितम्। यद्यप्यनयोः पक्षयोः रूढिवादिनामाग्रहमूलकत्वमेव, तर्कसिद्धं तु लोचनोक्तमेव पक्षत्रयम्,

तथापि वृत्तौ 'रामायण–महाभारतप्रभृतिनि लक्ष्ये सर्वत्र प्रसिद्धव्यवहारम्' ( कारिका १ ) इत्यनेनाप्रसिद्धिं प्रतिवदता 'यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि' इत्यादिमनोरथकविपद्यमुद्धरता च ग्रन्थकारेण तत् प्रकारद्वयमपि प्रतिपन्नमिति क्षमन्तां धाष्ट्र्यमिदं मे विद्वांसः।

## संक्षेपप्रकारस्त्वयम्

( १ ) यत्र विस्तरेण लेखस्तत्र ग्रन्थाशयप्रकटीकरणमात्रं स्वशब्दैर्विहितम्।

( २ ) यत्र विनाऽपि कञ्चन महत्त्वपूर्णं विशेषमुदाहरणान्तराणि दत्तानि तत्र प्रधानमुदाहरणमेव संगृहीतम्। परिकरश्लोकेष्वप्ययं विधिः।

( ३ ) लोचने येषां व्यङ्ग्यार्थानां विस्तरेण प्रदर्शनं तेषां संक्षेपेण प्रदर्शनम्। यथोदाहृतमेव प्राक्।

( ४ ) लोचनादपि बहिर्भूतानां केषाञ्चिदावश्यकविचाराणां विस्तरभिया परित्यागः। यथा तृतीयोद्द्योते 'गङ्गायां घोषः' इत्यत्र लक्षणाया जहत्स्वार्थात्वं वा अजहत्स्वार्थात्वं वेत्यादिविचारस्य। इत्यादि।

## 'सार' लेखनस्येतिहासः

मोहमही ( मुंबई ) वास्तव्यानां जगद्गुरुमहाप्रभु–श्रीवल्लभाचार्यपीठस्थितानां साम्प्रतं गोलोकलीलाविलासिनां गोस्वामिश्रीगोकुलनाथजीमहाराजानां ज्येष्ठतनुजन्मानो गोस्वामिश्रीकृष्णजीवनजीमहाराजाः साहित्यपरीक्षोत्तरणाय पुस्तकमिदं त्रयोदशवर्षेभ्यः पूर्वं निरमापयिषत। तदानीमहमजयमेरुनगरस्थे मेयोकालेजनाम्नि राजकुमारविद्यालये संस्कृताध्यापको धर्मोपदेशकश्चासम्, केनापि प्रसङ्गेन च मोहमहीमुपागाम्। तत्र पूर्वोक्ता गोस्वामिमहाराजाः साहित्यपरीक्षोत्तरणाय प्रयतमाना आसन्। तैस्तस्मिन् कर्मणि स्वसाहाय्याय मासमेकमहं तत्रावरुद्धः, ध्वन्यालोक-

रसगङ्गाधरयोश्च प्राचलदालोचनम् । अथावकाशसमाप्तिमाकलय्य प्रस्थातु-
[ कामं मामवोचंस्ते यद् रसगङ्गाधरस्य तु भवत्प्रणीतो हिन्दीरसगङ्गाधर-
नामाऽनुवादो विद्यते मत्सविधे, किन्तु ध्वन्यालोकस्य नाधिगच्छामि
विशुद्धपुस्तकमपीति कश्चन सारसंग्रहोऽस्य विलिख्य प्रेषणीयः । तत्प्रणय-
परवशेन मया समगृह्यत सारोऽयम्, किन्तु परीक्षायाः प्रत्यासन्नत्वादति-
शीघ्रतया सपादनस्यानिवार्यत्वेन, तदनन्तरं च विद्यालयकार्येषु व्यस्ततया
समयालाभेन च पुनर्विमर्शाय नालभ्यतावकाशः । तदेवं सम्पादितस्य
ध्वन्यालोकसारस्यास्य मदीयान्तेवासिद्वारा लेखिता परिष्कृता पुस्तिका
( Fair copy ) प्राहीयत तत्सविधे, अपरिष्कृता ( Rough copy ) तु
पतिताऽऽसीन्मदीये लेखसंग्रहे ।

अथ कार्यवशात् समये समये रामनगरं समागच्छता संस्कृतपुस्तक-
प्रकाशने सुप्रसिद्धायाः सुचिरन्तन्याः 'चौखम्बा-संस्कृत-सीरिज्'समभि-
धानायाः संस्थायाः सञ्चालकेन श्रीकृष्णदासश्रेष्ठिना प्रकाशनार्थं किमपि
पुस्तकं प्रदातुमहमनुरुद्धः । भूयो भूयोऽनुरोधेऽपि सद्यः पुस्तकप्रदानेऽसा-
मर्थ्यमुद्भावयतो मम सविधे ध्वन्यालोकसारमेनमुपस्थितमवगत्य तेनास्य
प्रारम्भिको भागः स्वयमेव साग्रहं गृहीतः । प्रारब्धं च तस्य प्रकाशनमपि ।

निवेदितमेवैतत् पुरस्ताद् यत् पुस्तकमिदमतित्वरया सम्पादितमिति
पुस्तकेऽस्मिन् तात्कालिकपरीक्षोपयोगी अतिसंक्षेप आसीत्, उदाहरण-
श्लोकानां च प्रतीकमात्राण्यासन् । प्रारब्धे तु मुद्रणे श्रीकाशीनरेशाध्या-
पनादिबहुविधकार्यव्यग्रतया नासीदेतावानवकाशो यत् पुस्तकमिदं पुनरा-
लोच्य सज्जीक्रियेत, विशेषतस्तु मुद्रणायोपक्रान्ते भागे । तेन विस्तरापेक्षय-
पि प्रथमोद्द्योतस्तु केवलमुदाहरणश्लोकप्रतीकपूर्त्यादि विधाय यथापूर्व-
मेवामुद्र्यत, द्वितीयोद्द्योतादारभ्य तु यथावसरं कृतोऽपि परिष्कारः ।

तदेवंविधायां परिस्थितौ मर्षयन्तु मार्मिकमहाभागा यावत्पुनर्मुद्रणं प्रथमोद्द्योतस्यातिसंक्षेपमन्यत्राप्ययथावत्परिष्कारमवकाशालाभेन दृष्टिदोषादिना चोर्वरितास्त्रुटीश्चेति भूयोभूयः साञ्जलिबन्धमभ्यर्थ्यते ।

## कृतज्ञताप्रदर्शनम्

कार्येऽस्मिन् मदीयान्तेवासिद्वयेन प्रतीकपूर्त्ति-प्रतिलिपिकरणादिषु साहाय्यमाचरितम् । तयोरेको रामनगराङ्ग्लभाषाविद्यालये संस्कृताध्यापकः साहित्याचार्यः श्रीदामोदरझामहोदयः, अपरस्तु जयपुरीयमहाराजसंस्कृतविद्यालयेऽध्यापकः साहित्याचार्यः श्रीदीनानाथपण्डितः । उभावप्येतौ शुभाशीर्भिर्योजयामि, विरमामि च विफलविस्तरात् ।

रामनगरम् ( काशी )
नववत्सरारम्भः ( चैत्रशुक्लप्रतिपद् )
२०११ विक्रमवत्सरः ।

विदुषां विधेयः
**पुरुषोत्तमशर्मा चतुर्वेदः**

श्रीहरिः

SANTOSH

# ध्वन्यालोक-सारः

## अथ प्रथमोद्द्योतः

मङ्गलाचरणम्

स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः ।
त्रायन्तां वो मधुरिपोः प्रपन्नार्त्तिच्छिदो नखाः ॥

### पूर्वपक्षाः प्रतिज्ञा च

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ॥
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ॥ १ ॥

अत्र पद्ये इदमुच्यते—

ध्वनिनिराकर्तॄणां पक्षत्रयम्—(१) ध्वनेरभावः (२) ध्वनिर्भाक्तः (भक्तावन्तर्भूतः) (३) ध्वनिर्वाचामविषय इति ।

(१) तत्र अभाववादिनां पक्षाः—

(क) प्रसिद्ध्यभावान्नास्ति ध्वनिः ।

(ख) शब्दार्थालङ्कारगुणवृत्तिरीतयः श्रूयन्ते । कोऽयं तद्व्यतिरिक्तो ध्वनिः ?

(ग) काव्ये हि परिगणितगुणादिमत्त्वमन्तरा सहृदयहृदयाह्लादकत्वस्यानुभूतत्वाद्योऽयं ध्वनिसंज्ञकः काव्यभेदः परिकल्प्यते, न स सकलविद्वन्मनोग्राही भवितुमर्हति ।

(घ) विच्छित्तिविशेषरूपस्य ध्वनेरुक्तेषु चारुत्वहेतुष्वेवान्तर्भावान्नायमपूर्वो ध्वनिः संभवति ।

(ङ) अस्तु वा कश्चिद् ध्वनिः, किन्तु न स प्रसिद्धैः काव्यलक्षणविधायिभिर्दर्शितः। तस्मात्प्रवादमात्रं ध्वनिः ।

(२) अमुख्यवृत्त्या काव्येषु व्यवहारं दर्शयद्भिर्भट्टोद्भटवामनादिभिर्ध्वनेर्मार्गो मनाक् स्पृष्टोऽपि न स्पष्टं प्रतिपादित इत्युच्यते 'भाक्तमाहुस्तमन्ये' इत्यनेन। तेन भक्तौ ( लक्षणायाम् ) एवास्यान्तर्भाव इति तेषां भावः ।

(३) अपरे पुनर्ध्वनेस्तत्त्वं सहृदयहृदयसंवेद्यमेवाहुः, नतु वाग्विषयम् ।

## प्रथमपक्षनिराकरणम्

### ध्वनिस्थापनम् ( 'ख' पक्षस्योत्तरम् )

योऽर्थः सहृदयश्लाघ्यः काव्यात्मेति व्यवस्थितः ।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥ २ ॥

अयमाशयः—काव्यशब्दैः प्रत्याय्यमानो योऽर्थः सहृदयैः श्लाघ्यते, यश्च काव्यात्मेत्येवंरूपेण व्यवस्थाप्यते, सोऽयं वाच्यप्रतीयमानोभयरूपोऽपि यथाऽविवेकिभिरात्मा शरीरादपृथग्भूतो गृह्यते तथैव प्रथमतः पिण्डीकृतरूपेण गृह्यते । अनन्तरं तु विवेकिभिरात्मेव सोऽयमर्थ उक्तविभागद्वयवान् स्पष्टमेव प्रतीयते—रमणीयोऽप्ययमर्थो वाच्य एव, अयं पुनः प्रतीयमान इति । एवं च प्रथमं रमणीयतया संमिलितरूपेण ग्रहणेऽपि प्रतीयमानस्यैवात्मत्वं सिध्यति न वाच्यप्रतीयमानोभयभेदयोः, यथा चार्वाकस्य शरीरात्मनोरपृथग्ग्रहणेऽपि न वस्तुतस्तथात्वमिति ।

तत्र वाच्यः प्रसिद्धो यः प्रकारैरुपमादिभिः ।
बहुधा व्याकृतः सोऽन्यैस्ततो नेह प्रतन्यते ॥ ३ ॥
प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ ४ ॥

अयमाशयः—सोऽयं द्विशाखत्वेन स्पष्टं गृहीतो रमणीयोऽर्थः शरीरादिसौन्दर्यमिव बाह्यदृष्ट्या प्रतीयमानो वाच्य एव, व्याकृतश्चायं सुप्रसिद्धोऽर्थो बहुधोपमादिप्रकारैः प्राचीनैः काव्यलक्षणविधायिभिः । यत्पुनर्महाकवीनां वाणीषु प्रतीयमानं ( व्यङ्ग्यं ) वस्तु, तत्तु प्रसिद्धावयवातिरिक्तमङ्गनासु लावण्यमिव स्फुटमवबुध्यमानं

---

१. मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । संलक्ष्यते यदङ्गेषु तल्लावण्यमिहोच्यते ।

भिन्नमेव, तत्प्रतिपादितादलङ्कारादिरूपाद्वस्तुनः। सोऽयमर्थः प्रथमतो 'वस्त्वलङ्कार-रसादि' रूपभेदत्रयवानप्यनेकभेदभिन्नोऽधस्तात् प्रतिपाद्यते।

## व्यङ्ग्यस्य वाच्यभिन्नत्वविचारः

सोऽयमर्थो न वाच्यत्वेनाभिधातुं शक्यते। वस्त्वलङ्काररसादिरूपस्य त्रिविध-व्यङ्ग्यस्य वाच्यातिरिक्तत्वात्।

(१) तत्र वस्तुरूपव्यङ्ग्यस्य वाच्यभिन्नत्वं यथा—

भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण।
गोलाणइकच्छकुडङ्गवासिणा दरीअसीहेण॥

( भ्रम धार्मिक विश्वस्तः स शुनकोऽद्य मारितस्तेन॥
गोदावरीनदीकच्छकुञ्जवासिना दृप्तसिंहेन॥ )

अत्र 'भ्रमे'ति वाच्यस्य विधिरूपत्वे व्यङ्ग्यस्य 'मा गम' इत्यस्य निषेधरूपत्वात्।

अत्ता एत्थ णिमज्जइ, एत्थ अहं, दिअसअं पलोएहि।
मा पहिअ! रत्तिअन्धअ! सेज्जाए मह णिमज्जहिसि॥

( श्वश्रूरत्र निमज्जति, अत्राहं, दिवसकं प्रलोकय।
मा पथिक! रात्र्यन्ध! शय्यायामावयोर्निमङ्क्ष्यसि। )

अत्र 'मा निमङ्क्ष्यसि' इति वाच्यस्य प्रतिषेधरूपत्वे व्यङ्ग्यस्य 'समागमिष्य-सी'त्यस्य विधिरूपत्वात्।

वच्च मह व्विअ एक्केइ होन्तु णीसास-रोइअव्वाइँ।
मा तुज्झ वि तीअ विणा दक्खिण्णहअस्स जाअन्तु।

( व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि॥
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत॥ )

अत्र 'व्रजे'ति वाच्यस्य विधिरूपत्वेऽपि 'गाढमन्यु'रूपस्य व्यङ्ग्यस्याऽनुभय-रूपत्वात्।

दे आ पसिअ णिवत्तसु मुह-ससि-जोह्णा-विलुत्त-तम-णिवहे।
अहिसारिआणँ विग्घं करोसि अण्णाँ वि हआसे॥

( प्रार्थये तावत् प्रसीद निवर्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे।
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे!। )

'मध्ये मार्गे स्थितिर्नोचिता, मदीयं वा गृहमागच्छ, त्वदीयं वा गच्छावे'ति नायकाभिप्रायः ।

अत्र 'निवर्त्तस्वे'ति वाच्यस्य प्रतिषेधरूपत्वे चानुरूपस्य व्यङ्ग्यस्यानुभयरूपत्वात् ।

कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरम् ।
सभमर-पउम-ग्घाइणि वारिअवामे सहसु एह्णिम् ॥

( कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥ )

अत्र उपालम्भरूपस्य वाच्यविषयस्यैकत्वेऽपि व्यङ्ग्यविषयस्य नायिका-तद्भर्तृ-सपत्नी-जारादिबोद्धृभेदेन विभिन्नविषयत्वाद्[1] । इत्यादि ।

(२) अलङ्काररूपव्यङ्ग्यविचारोऽग्रे विस्तरेण विधास्यते ।

(३) अथ तृतीयं रसादिरूपं व्यङ्ग्यं तु न कदाचिदपि वाच्यतामर्हति, साक्षाच्छब्दव्यापारविषयत्वाभावात्, अभिधया अप्रतिपाद्यत्वादिति यावत् । नहि 'रस' इत्युक्ते रसप्रतीतिर्भवति, किन्तु विभावादिमुखेनैव । तस्मादयं वाच्यात् सर्वथा भिन्न एव । तथाहि—रसादेर्वाच्यत्वं 'शृङ्गारा'दिशब्दैर्वा स्यात्, विभावादिप्रतिपादनमुखेन वा ।

तत्र नाद्यः—

यद्विश्रम्य विलोकितेषु बहुशो निःस्थेमनी लोचने
यद्गात्राणि दरिद्रति प्रतिदिनं लूनाब्जिनीनालवत् ।
दूर्वाकाण्डविडम्बकश्च निबिडो यत्पाण्डिमा गण्डयोः
कृष्णे यूनि सयौवनासु वनितास्वेषैव वेषस्थितिः ॥

इत्यादिषु तादृशशब्दाभावेन रसाद्यप्रतीतिप्रसङ्गात् । यत्र तु—

याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया ।
तद्गीतं गुरुबाष्पगद्‌गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥

---

१. नायिकाविषयं यद्व्यङ्ग्यम्—'अग्रे एवं न विधातव्यम्' इति, भर्तृविषयम्—'अपराधो नास्ती'ति, सपत्नीविषयं—'सौभाग्यातिशयदर्शनम्', जारविषयम्—'प्रकटरददंशनविधिर्न विधेयः' इत्येवमनेकविधम् ।

इत्यादौ 'सोत्कण्ठया' इत्यादिना व्यङ्ग्यस्याप्युत्कण्ठादेरुक्तिः, तत्र सिद्धसाधनमात्रम्, न तु तेन शब्देनोत्कण्ठादेः प्रतीतिः। अन्यथा पूर्वोक्तपद्यादौ सा न स्यात्। तदेवं केवलेभ्यो विभावादिभ्यो रसादिप्रतीतिदर्शनात्, विभावादिप्रतिपादनरहिते च शृङ्गारादिशब्दमात्रवति काव्ये तदप्रतीतिदर्शनादन्वयव्यतिरेकाभ्यामभिधेयसामर्थ्याक्षिप्तत्वमेव रसादीनाम्, न त्वभिधेयत्वम्। इति तृतीयोऽपि प्रभेदो वाच्याद्भिन्न एव।

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥ ५॥

अयमेव व्यङ्ग्योऽर्थः काव्यस्यात्मा। यथा क्रौञ्चस्य सहचरीविनाशोत्थः शोक एव तादृशविभावतदुत्थाक्रन्दाद्यनुभावचर्वणयाऽऽस्वाद्यतामापन्नः—

'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥'

एतच्छ्लोकरूपतामाप्तः।

ध्वनेः सकलविद्वन्मनोग्राहित्वम् ('ग' पक्षस्योत्तरम्)

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्॥ ६॥

अयमेव चार्थो महाकविवाणीषु स्वयमायातस्तत्प्रतिभाविशेषमभिव्यनक्ति, तन्माहात्म्यादेव च केषांचित् कालिदासादीनामेव महाकवित्वम्।

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्॥ ७॥

सोऽयमर्थो व्याकरणादिज्ञानमात्रेण नावबुध्यते, किन्तु शब्दार्थतत्त्ववेदिभिरेव बुध्यते, अतोऽप्यस्ति वाच्याद् भिन्नः।

तस्यैव च काव्ये प्राधान्यमिति दर्शयति—

सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।
यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥ ८॥
आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः॥ ९॥

यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते ।
वाच्यार्थपूर्विका तद्वत् प्रतिपत्तस्य वस्तुनः ॥ १० ॥
स्वसामर्थ्यवशेनैव वाक्यार्थं प्रतिपादयन् ।
यथा व्यापारनिष्पत्तौ पदार्थो न विभाव्यते ॥ ११ ॥
तद्वत् सचेतसां सोऽर्थो वाच्यार्थविमुखात्मनाम् ।
बुद्धौ तत्त्वार्थदर्शिन्यां झटित्येवावभासते ॥ १२ ॥

तादृशार्थस्य तद्व्यञ्जकशब्दस्यैव च महाकवित्वसंपादकत्वम् । वाच्ये प्रयत्नस्तु तदुपायतया, यथाऽऽलोकार्थिनो दीपशिखायाम् । यथा पदार्थद्वारेण वाक्यार्थप्रतीतिः, यथा वा वाक्यार्थप्रतीतिकाले पदार्थानां न पृथक् प्रतीतिः, तथैव वाच्यार्थद्वाराऽस्य प्रतीतिः, गौणत्वं च वाच्यार्थस्य ।

## ध्वनिकाव्यम्

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥ १३ ॥

यत्र शब्दोऽर्थश्च स्वमुपसर्जनीकृत्य सहृदयहृदयाह्लादिनं तमर्थं व्यङ्क्तः, तद् ध्वनिकाव्यमित्युच्यते । अतः काव्यचारुत्वहेतुभ्य उपमादिभ्यः सर्वथा विभक्त एवास्य विषयः, उपमादीनां वाच्यवाचकाभ्यामनतिरिक्तत्वात्, शब्दार्थतत्प्रतिपादकशब्द-रूपत्वादिति यावत् ।

### प्रसिद्ध्यभावनिराकरणम् ( 'क' पक्षस्योत्तरम् )

अथ प्रसिद्ध्यभावान्न ध्वनिरिति यदुच्यते तन्न चारु । लक्ष्यानुसारेण हि लक्षणानि निर्मीयन्ते । लक्ष्येषु रामायणमहाभारतादिषु स्फुटं तदुपलब्धेर्लक्षणकृताम-प्रसिद्धिरप्रयोजिकैव ।

### ध्वनेरलङ्कारादिष्वनन्तर्भावः ( 'घ' पक्षनिराकरणम् )

न चास्य चारुत्वहेतुष्वलङ्कारादिष्वन्तर्भावः । ते हि ध्वन्यङ्गभूताः, न तु ध्वनिरूपाः । तेन—

व्यङ्ग्यव्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः ।
वाच्यवाचकचारुत्वहेत्वन्तःपातिता कुतः ? ॥

न च व्यङ्ग्यार्थप्रतीतिमत्सु समासोक्त्यादिष्वप्यस्यान्तर्भावः। तेषु व्यङ्ग्यस्य गुणीभावात्, व्यङ्ग्यप्राधान्ये च ध्वनिरिति भेदात्। तथाहि—

उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितं न लक्षितम्॥

इति समासोक्तौ निशाशशिनोरेव वाक्यार्थबोधविषयत्वम्, नायिकानायकव्यवहाररूपं व्यङ्ग्यं तु तदुपस्कारकतया गौणमेव। आक्षेपेऽपि—

अहं त्वा यदि नेक्षेय क्षणमप्युत्सुका ततः।
इयदेवास्त्वतोऽन्येन किमुक्तेनाप्रियेण ते॥

अत्र प्रतिषेध एव काव्यशरीरम्, व्यङ्ग्यविशेषस्तु आक्षिप्यमाणस्तदङ्गमेव, व्यङ्ग्यस्य चारुत्वाभावात्। चारुत्वनिबन्धनं चात्र प्राधान्यम्। यथा दीपकापह्नुत्यादौ व्यङ्ग्याऽप्युपमा न प्रधानम्, तथैवेहापि व्यङ्ग्यस्य न प्राधान्यम्।

आहूतोऽपि सहायैरोमित्युक्त्वा विमुक्तनिद्रोऽपि।
गन्तुमना अपि पथिकः संकोचं नैव शिथिलयति॥

इत्यादिविशेषोक्तावपि संकोचशिथिलीकरणरूपवाच्यस्य यथा चारुत्वम्, न तथा प्रकरणसामर्थ्यात्प्रतीतस्यापि 'प्रियतमास्वप्नसमागमादे'र्व्यङ्ग्यस्य, तस्य वाच्योपस्कारकत्वात्।

ये पुनः पर्यायोक्ते ध्वनेः प्राधान्यं मन्यन्ते, तैरपि प्रचुरविषये ध्वनावस्यान्तर्भावः शक्यः कर्त्तुम्, न पुनर्ध्वनेरस्मिन्, सूचीसुषिरे सुमेरोरिव। वस्तुतस्तु—

'गृहेष्वध्वसु[1] वा नान्नं भुञ्ज्महे यदधीतिनः। विप्रा न भुञ्जते'

इति भामहाद्युदाहृतसदृशे पर्यायोक्ते व्यङ्ग्यस्य प्राधान्यमेव नास्ति, तत्र तस्योपसर्जनीभावात्। अत एव तेनाप्युक्तम् "तच्च[2] रसदाननिवृत्तये"।

अपह्नुतिदीपकयोस्तु वाच्यस्य प्राधान्यं व्यङ्ग्यस्य चानुयायित्वं प्रसिद्धमेव।
अङ्गाङ्गिभावसंकरेऽप्येकस्यापरशोभाजनकत्वेन न व्यङ्ग्यस्य प्राधान्यं संभवति।

---

१. चैद्यं प्रति भगवतो वासुदेवस्य वचनम्। 'वेदज्ञविप्रान् संभोज्यैव वयं भुञ्ज्महे'ति तदर्थः।
२. रसशब्दो विषवाची। शिशुपालद्वारा विषदानं माभूदिति भगवतैवमुक्तम्।

समप्राधान्यरूपसंकरे तु स्पष्ट एवैकतरस्य प्राधान्याभावः । अथ—

होइ ण गुणाणुराओ खलाणँ णवरं पसिद्धिसरणाणम् ।
किर पडिसणुइ ससिमणी चन्दे ण पिआमुहे दिट्ठे ॥

( भवति न गुणानुरागः खलानां केवलं प्रसिद्धिशरणानाम् ।
किन्तु प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥ )

इत्यादिषु यदि व्यङ्ग्यप्राधान्यं दृश्यते तर्हि स भवतु ध्वनेर्विषयः, न तु ध्वनिस्तत्रान्तर्भवितुं शक्नोति, पर्यायोक्तन्यायात् ।

अप्रस्तुतप्रशंसायामपि समप्राधान्यम् । तथाहि—अप्रस्तुतात् सामान्यविशेषभावे, कार्यकारणभावे, सारूप्ये चेति पञ्चधाऽप्रस्तुतप्रशंसा । तत्र सामान्यविशेषयोरविनाभावादस्त्येव समप्राधान्यम्, एकप्रतीतावपरस्य समानभावेन प्रतीतेः । एवमेव कार्यकारणयोः । सारूप्ये पुनर्यत्र व्यङ्ग्यस्य प्राधान्यं स भेदो ध्वनावन्तर्भवतु, न पुनर्ध्वनिस्तत्रान्तर्भावयितुं शक्यः ।

तदयमत्र संक्षेपः—

व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः ।
समासोक्त्यादयस्तत्र वाच्यालङ्कृतयः स्फुटाः ॥
व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।
न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ॥
तत्परावेव शब्दार्थौ यत्र व्यङ्ग्यं प्रतिस्थितौ ।
ध्वनेः स एव विषयो मन्तव्यः सङ्करोज्झितः ॥

ध्वनेः काव्यरूपत्वेनाङ्गित्वादलङ्कारादीनां च तदुपस्कारकत्वाद् यथावयविनो नावयवेष्वन्तर्भावस्तथा न ध्वनेरपि तेष्वित्यप्यपरो हेतुः । तदेवं ध्वनेर्महाविषयत्वान्नास्य कुत्राप्यन्तर्भावः, व्यङ्ग्यप्रधानानामलङ्कारादीनां तु भवत्वत्रान्तर्भावः ।

## ध्वनेः पूर्वसिद्धत्वम् ( 'ङ' पक्षस्योत्तरम् )

न चायं ध्वनिरस्मदुपज्ञम्, वैयाकरणैस्तत्स्वीकारात् ।
तदेवं ध्वनेरभाववादिनः प्रत्युक्ताः ।

## ध्वनिभेदविमर्शः

तदेवमस्ति ध्वनिः। तस्य द्वौ भेदौ—अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्चेति। आद्यस्योदाहरणम्—

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥

अत्र शूर-कृतविद्य-सेवकानां प्राशस्त्यम् अशब्दवाच्यं व्यङ्ग्यमर्यादया भासते। द्वितीयस्योदाहरणम्—

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
तरुणि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥

अत्रानुरागिणः प्रच्छन्नस्वाभिप्रायख्यापनवैदग्ध्य-चाटुविरचनात्मकं विभावोद्दीपनं व्यङ्ग्यम्।

## द्वितीयपक्षनिराकरणम्

( २ ) यदप्युक्तं भक्तिर्ध्वनिरिति तत् प्रतिसमाधीयते—

भक्त्या बिभर्त्ति नैकत्वं रूपभेदादयं ध्वनिः।
अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया॥ १४॥
उक्त्यन्तरेणाशक्यं यत् तच्चारुत्वं प्रकाशयन्।
शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयो भवेत्॥ १५॥
रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।
लावण्याद्याः प्रयुक्तास्ते न भवन्ति पदं ध्वनेः॥ १६॥
मुख्यां वृत्तिं परित्यज्य गुणवृत्त्याऽर्थदर्शनम्।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः॥ १७॥

न च भक्तिः ( लक्षणा ) ध्वनिः। भक्तेरुपचारमात्रत्वात्, व्यङ्ग्यस्य पुनर्वाच्य-वाचकातिरिक्तस्य प्रधानत्वात्। व्यङ्ग्यातिरिक्तेऽपि भक्तिदर्शनात्। यथा—

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम्।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्॥
चुम्बिज्जइ सअहुत्तं अवरुन्धिज्जइ सहस्सहुत्तम्मि।
विरमिअ पुणो रमिज्जइ पिओ जणो णत्थि पुणरुत्तम्॥

( चुम्ब्यते शतकृत्वोऽवरुध्यते सहस्रकृत्वः ।
विरम्य पुना रम्यते प्रियो जनो नास्ति पुनरुक्तम् ॥ )

कुविआओ पसण्णाओ ओरुण्णमुहीओ विहसमाणाओ ।
जह गहियो तह हिअअं हरन्ति सुच्छन्दमहिलाओ ॥

( कुपिताः प्रसन्ना अवरुदितवदना विहसन्त्यः ।
यथा गृहीतास्तथा हृदयं हरन्ति स्वच्छन्दमहिलाः ॥ )

अज्जाए पहारो णवलदाए दिण्णो पिएण थणवट्ठे ।
मिउओ वि दूसहो व्विअ जाओ हिअए सवत्तीणम् ॥

( आर्यायाः प्रहारो नवलतया दत्तः प्रियेण स्तनपृष्ठे ।
मृदुकोऽपि दुःसह इव जातो हृदये सपत्नीनाम् ॥ )

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः ।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥

एषूदाहरणेषु क्रमशः स्फुटीकरोतीत्यर्थे 'वदती'ति 'अनुपादेय'मित्यर्थे 'पुनरुक्तमि'ति, स्ववशे कुर्वन्तीत्यर्थे 'हरन्ती'ति, सफलीकृत इत्यर्थे 'दत्तः' इति, प्राप्नोतीत्यर्थे 'अनुभवति' इति लक्ष्यन्ते। नैष ध्वनेर्विषयः, उक्त्यन्तरेणाशक्यस्य चारुत्वस्य प्रकाशन एव तत्सत्त्वात्। अत एव लावण्याद्याः शब्दा न ध्वनेर्विषयः, रूढत्वात्। किञ्च शब्दस्य स्खलद्गतित्व एव लक्षणा, लक्षणया प्रतिपाद्ये प्रयोजने पुनः शब्दस्य स्खलद्गतित्वाभावान्नासौ लक्षणया प्रतिपादयितुं सुशकः। न च तत्प्रतिपादने शब्दस्यामुख्यत्वम्, तथा सति तादृशप्रयोगस्य दुष्टत्वापत्तेः। तस्मात्—

वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता ।
व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम् ? ॥ १८ ॥

न चाविवक्षितवाच्यरूपस्य ध्वनिभेदस्य भक्तिमूलत्वाद्भक्तेर्ध्वनिलक्षणता स्यादिति वाच्यम्।

कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम् ।
लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥ १९ ॥

कस्य चिद् ध्वनिभेदस्योपलक्षणमात्रं सा। यदि तयाऽयं लक्ष्यत इति तत्रान्त-

भवत्वयमित्युच्येत, तदपि न साधु । एवं सति सर्वेषामलङ्काराणामभिधया प्रतिपादनाच्च तेषामपीतरल्लक्षणं कर्त्तव्यमित्यप्यापद्येत ।

यदि चास्ति किञ्चिदेभ्यो भिन्नं लक्षणं ध्वनेस्तर्हि ध्वनिरस्तीति नः पक्ष एव समर्थितो भवति ।

## तृतीयपक्षनिराकरणम्

( ३ ) अथावशिष्यन्ते ध्वनेरनाख्येयत्ववादिनः । ते तु ध्वनेः सामान्यविशेषलक्षणैरेव दत्तोत्तराः । यदि तु तेऽतिशयोक्त्या काव्यान्तरातिशायित्वेन ध्वनिं प्रशसन्ति, न पुनर्वागविषयत्वं मन्यन्ते । तर्हि तेषां युक्त एव पक्षः ।

इति प्रथम उद्द्योतः ।



# अथ द्वितीयोद्द्योतः

प्रथमोद्द्योते द्विविधो ध्वनिः प्रकाशितः—अविवक्षितवाच्यः, विवक्षितान्यपरवाच्यश्च । तत्र—

**अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।**
**अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥ १ ॥**

अविवक्षितवाच्यस्य ध्वनेर्द्वौ भेदौ—अर्थान्तरसंक्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्च । अर्थान्तरसंक्रमितवाच्योदाहरणम्—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ॥
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥

इत्यादि । अत्र 'राम' पदं राज्यपरित्यागादिदुःखसहनशीले तावताऽपि संभावितजीवितत्वे चार्थान्तरे संक्रमितम् । एतदेवोक्तम् 'अनेन हि व्यङ्ग्यधर्मान्तररूपपरिणतः संज्ञी प्रत्याय्यते, न तु संज्ञिमात्रम्' इति पङ्क्त्या ।

ताला जाअन्ति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥

( तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ )

इत्यत्र द्वितीय'कमल'शब्दः 'सौन्दर्यादिमत्कमलरूपे'ऽर्थान्तरे संक्रमितः । अत्यन्ततिरस्कृतवाच्यो यथा—

रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥

इत्यत्रा'न्ध'शब्दो मालिन्यं बोधयति, न तु दृष्ट्युपहतत्वम् । अयं पदगतः ।

गअणं च मत्तमेहं धारालुलिअज्जुणाइँ अ वणाइँ ।
णिरहंकारमिअङ्का हरन्ति णीलाओ वि णिसाओ ॥

( गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि ।
निरहंकारमृगाङ्का हरन्ति नीला अपि निशाः ॥ )

इति पद्ये वाक्यगतः, पदद्वयस्य[1] तथात्वात् । अत्र 'मत्त'शब्दस्य 'असमञ्जसकारित्वदुर्निवारत्वा'दि, 'निरहङ्कार'त्वस्य च 'विच्छायत्वा'दि लक्ष्यम् ।

असंलक्ष्यक्रमोद्द्योतः क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २ ॥

विवक्षितान्यपरवाच्यस्य द्वौ भेदौ—असंलक्ष्यक्रमव्यङ्ग्यः, संलक्ष्यक्रमव्यङ्ग्यश्चेति ।

रसभावतदाभासतत्प्रशान्त्यादिरक्रमः ।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ ३ ॥

रस-भाव-रसाभास-भावाभास-भावशान्त्यादयोऽसंलक्ष्यक्रमाः ध्वनयः ।

वाच्यवाचकचारुत्वहेतूनां विविधात्मनाम् ।
रसादिपरता यत्र स ध्वनेर्विषयो मतः ॥ ४ ॥

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः ।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः ॥ ५ ॥

इदमत्र बोध्यम्—यत्र हि रसादीनां प्रधानता तत्रैषां ध्वनिः, यत्र पुनरेतेऽन्य-

---

१. एकपदगतस्यैव पदगतत्वेन स्वीकरात् ।

स्मिन् वाक्यार्थेऽङ्गभूतास्तत्रेमे रसवदाद्यलङ्काराः।[1]

त इमेऽलङ्कारा द्विविधाः—शुद्धाः संकीर्णाश्च। शुद्धो यथा—

किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण! प्रवासरुचिता केनासि दूरीकृतः।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः॥

अत्र शुद्धस्य करुणरसस्य राजविषयकरतिभावाङ्गत्वम्। संकीर्णो यथा—

क्षिप्तो हस्तावलग्नः, प्रसभमभिहतोऽप्याददानोंऽशुकान्तं,
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥

इत्यादौ।

अत्र श्लेषोपस्कृतेर्ष्याविप्रलम्भस्य शिवप्रभावातिशयवर्णनाङ्गत्वम्।

तदेवं रसादीनां प्राधान्ये ध्वनित्वम्, उपमादीनां रसाद्युपस्कारकत्वादलङ्कारत्वम्, अर्थान्तरस्य वाक्यार्थत्वे रसादीनां चाङ्गत्वे त्वेषामप्यलङ्कारत्वमिति निष्कर्षः।

एकदेशिमतम्—विषयेऽस्मिन् केचनैवं मन्यन्ते-यद् 'यत्र यत्र चेतनानां वाक्यार्थतात्पर्यविषयत्वं तत्र सर्वत्र रसवदाद्यलङ्काराणां विषय' इति। तदिदं न साधु। एवं सति सर्वत्र रसवदादय एवालङ्काराः स्युः, उपमादीनामलङ्काराणां तु विरलविषयता, विषयाभाव एव वा, प्रसज्येत। यतो यथाकथञ्चिच्चेतनवस्तुवृत्तान्तयोगो दुष्परिहर एव, नग-नगरादिवर्णनेऽपि चेतनसंपर्कस्य यथाकथञ्चित् प्राप्तेः।

अथ यदि चेतनवृत्तान्तयोजना न रसवदादेः प्रयोजिका, किन्तु यत्र केवलं चेतनवर्णनप्राधान्यं तदेव रसवदादेर्विषय इत्युच्येत, तर्हि रसनिधानभूतानां काव्यप्रबन्धानां भूयान् भागो नीरस एव संपद्येत। यथा—

तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरचना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।

---

१. वस्तुतस्तु—रसभावादीनामितररसभावाद्यङ्गत्वे गुणीभूतव्यङ्ग्यत्वमेव, नालङ्कारत्वम्। शब्दार्थद्वारा रसोपस्कारकस्यैवालङ्कारत्वात्, अन्यथा गुणेष्वतिव्याप्तेः।

यथाविद्धं[1] याति स्खलितमभिसन्धाय बहुशो
नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥
तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।
चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥
तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र ! कलिन्दशैलतनयातीरे लतावेश्मनाम् ।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥

इत्युदाहरणत्रयेऽचेतनानां वाक्यार्थत्वेऽप्यस्त्येव चेतनवृत्तान्तयोजना ।

अथ यदि यत्र चेतनवस्तुयोजनाऽस्ति तत्र रसादिरलङ्कार इत्युच्येत, तर्हि उपमादीनां निर्विषयतारूपो दोषस्तदवस्थ एव, चेतनवस्तुवृत्तान्तयोजनारहितस्याचेतनवस्तुवृत्तान्तस्यालाभात्, यतः सर्वोऽपि जडसमूहो विभावत्वेन चेतनवस्तुवर्णने युज्यत एव । तस्मादस्मदुक्तैव व्यवस्था श्रेयसी, न त्वियं कष्टकल्पना ।

## गुणाः

तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः ।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत् ॥ ६ ॥

गुणा अङ्गिनो रसस्य धर्माः शौर्यादिवत्, अलङ्कारास्तु कटककुण्डलादिवदङ्गाश्रयिणः ।

शृङ्गार एव मधुरः परः प्रह्लादनो रसः ।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ ७ ॥
शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥ ८ ॥

शृङ्गारस्य परममधुरत्वम् । माधुर्यं चास्य गुणः । न तु श्रव्यत्वमेव माधुर्यमिति शङ्क्यम्, तस्यौजोगुणेऽपि सत्त्वात् । माधुर्यस्य शृङ्गाराद्विप्रलम्भे, तस्मात् करुणे प्रकर्षः ।

रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः ।
तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम् ॥ ९ ॥

---

१. आविद्धम् = कुटिलम् ।

रौद्रादीन् रसान् दीप्तिमत्त्वाल्लक्षणया दीप्तिरित्यपि वदन्ति। वस्तुतस्तु तद्व्यञ्जकशब्दार्थयोरोजसः स्थितिः। दीर्घसमासवद्वाक्यमोजः प्रकाशयति। यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-सञ्चूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः॥

अर्थस्तु दीर्घसमासरचनां नापेक्षते, किन्तु प्रसन्नपदतामात्रम्, यथा—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥

इत्यादौ दीर्घसमासरचनाभावेऽपि शब्दार्थयोरोजोव्यञ्जकत्वम्।

समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः॥ १०॥

अकलुषोदकमिव शब्दार्थयोः स्वच्छता प्रसादः, स च सर्वरससाधारणो गुणः। व्यङ्ग्यार्थापेक्षयैवास्य गुणत्वम्।

## दोषाः

श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥ ११॥

ये हि श्रुतिदुष्टादयोऽनित्या दोषास्ते शृङ्गार एव हेयाः, नान्येषु रसेषु, अन्यथा तेषामनित्यतैव न स्यात्।

## असंलक्ष्यक्रमव्यङ्ग्यभेदाः

तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।
तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने॥ १२॥

अन्योन्यसंबन्धपरिकल्पने रसादीनामनन्ता भेदाः संभवन्ति। यथा शृङ्गारस्य संभोगविप्रलम्भोभयभेदवतो भूयांसः परस्परप्रेमदर्शनादयोऽभिलाषादयश्च भेदाः। तेषां च प्रत्येकं विभावानुभावव्यभिचारिभेदे, तेषां च देशकालाश्रयाद्यवस्थाभेदे एकस्यापि रसस्यापरिमेयत्वम्, किं पुनरङ्गप्रभेदकल्पनायाम्।

दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम् ।
बुद्धिरासादितालोका सर्वत्रैव भविष्यति ॥ १३ ॥

## शृङ्गाररसप्रधाने काव्ये अलङ्कारादिविधानम्

शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धवान् ।
सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥ १४ ॥

अङ्गिनः ( प्रधानस्य ) शृङ्गारस्य सर्वेष्वपि प्रभेदेषु अनुप्रासो न व्यञ्जको भवति, यतोऽनुप्रासे एकरूपस्य = समानाकारस्य शब्दस्य निबन्धनं भवति । अङ्गभूते शृङ्गारे तु कामचारः ।

ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ।
शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥ १५ ॥

'प्रमादित्वम्' इत्यनेनैतद् दर्श्यते–काकतालीयेन कदाचित् कस्यचिदेकस्य यमकादेर्निष्पत्तावपि अलङ्कारान्तरवद् बाहुल्येन निबन्धो न कर्त्तव्यः । विप्रलम्भे तु सर्वथा न कर्त्तव्यः ।

रसाक्षिप्ततया यस्य बन्धः शक्यक्रियो भवेत् ।
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ १६ ॥

अत्र वृत्तौ 'निष्पत्तावाश्चर्यभूतोऽपि' इत्यस्यार्थः–अप्रयत्नेन यदीया निष्पत्तिराश्चर्यं जनयेत्तादृशः । एवंविधोऽपि रसाक्षिप्ततयैव निबद्धोऽलङ्कारो ध्वन्यङ्गं भवति ।

यः कश्चनालङ्कारो रसनिबन्धने प्रत्यूहतामापद्यते न स रसाङ्गतामर्हति । यमके तु शब्दविशेषान्वेषणरूपस्य प्रयत्नस्यावश्यसंपाद्यत्वात्स सर्वथैव हेयः । अलङ्कारान्तराणि तु रससङ्घटने समाहितचेतसोऽपि प्रतिभानवतः कवेरनायासेन संपद्यन्ते । यथा कादम्बरीदर्शनावसरे कादम्बर्याम्, अन्यत्र च । रूपकादीनां रसाभिव्यक्तौ न बहिरङ्गत्वम्, वाच्यविशेषैराक्षेप्तव्ये रसे तेषां तादृशवाच्यविशेषरूपत्वात् ।"

रसवत्स्वपि यमकादिषु रसादीनामङ्गत्वम्, यमकादीनामङ्गित्वमिति मन्तव्यम् । रसाभासादिषु तु भवेदङ्गत्वम् ।

अस्यैवार्थस्य संग्रहश्लोकाः—

रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित् ।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥

यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते ।
शक्तस्यापि, रसेऽङ्गत्वं तस्मादेषां न विद्यते ॥
रसाभासाङ्गभावस्तु यमकादेर्न वार्यते ।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते ॥ इति ।

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।
रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥ १७ ॥
विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन ।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता ॥ १८ ॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम् ।
रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम् ॥ १९ ॥

समीक्ष्य विनिवेशित इति । यथा करे धृतो नूपुरश्चरणे धृतो वलयश्च न शरीरशोभां जनयतः, यथास्थानं धृतौ तु जनयतस्तथैव रूपकादिरपि रसस्य ।

तथा चाऽलङ्काराणां रसाङ्गत्वसाधने चतुष्टयं विधेयम्-( १ ) अलङ्काराणां रसाङ्गत्वेन विवक्षा, नाङ्गित्वेन ( २ ) काले च ग्रहणत्यागौ ( ३ ) निर्वाहेऽनाग्रहः ( ४ ) निर्वाहेऽपि अङ्गत्वं संपन्नं न वेत्यस्य यत्नेन प्रत्यवेक्षणम् ।

(१) रसाङ्गत्वेन विवक्षा यथा—

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरम् ,
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥

इत्यत्र स्वभावोक्तिः रसानुगुणा, किन्तु—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥

इत्यत्र रसादितात्पर्ये सत्यपि पर्यायोक्तस्याङ्गित्वेन विवक्षा, न रसस्य ।

( २ ) अवसरे ग्रहणं यथा—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

इत्यत्र उपमानुप्राणकस्य श्लेषस्य ।

अवसरे त्यागो यथा—

रक्त[1]स्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-
स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्तास्तथा मामपि ।
कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥

इत्यत्र प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसं पुष्णाति ।

न चात्र नरसिंहवत् श्लेषव्यतिरेकलक्षणं संकररूपमलङ्कारान्तरमेवेति शङ्क्यम् । यत्र हि श्लेषविषय एव शब्दे प्रकारान्तरेण व्यतिरेकप्रतीतिर्जायते स तस्य विषयः । अत्र ह्यन्य एव शब्दः श्लेषस्य विषयः, अन्यश्च व्यतिरेकस्य, तेनेह संसृष्टिः, न तु संकरः, अन्यथा तस्या विषयापहारात् । न च श्लेषमूलोपमयैवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इति वाच्यम् । प्रतीयमानाया अप्युपमाया व्यतिरेकसाधकत्वात्, कण्ठेनाभिधानस्यानपेक्षणात् । यथा—

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि शम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥

अत्र हि साम्योक्तये श्लेषादिकं नोपात्तमेव । न च श्लेषो व्यतिरेकचारुत्वसाधनायाऽवश्यमपेक्षितोऽपि, तं विनापि चारुत्वसिद्धेः । यथा—

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं, तव शशी, वृत्तिः समैवावयो-
स्तत्किं मामनिशं सखे ! जलधर ! त्वं दग्धुमेवोद्यतः ॥

( ३ ) निर्वाहेऽनाग्रहो यथा—

कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥

---

१. रक्तो लोहितः, अन्यत्रानुरक्तः । शिलीमुखाः भ्रमराः, अन्यत्र बाणाः ।

इत्यत्र बाहुलतिकायाः पाशत्वेन रूपणेऽपि दयिताया व्याधवधूत्वेन, वासगृहस्य च कारागारपञ्जरादिरूपेण वर्णनमकृत्वा सावयवरूपकस्यानिर्वाह एव रसपरिपोषकः, अन्यथा महदनौचित्यं स्यात्। किन्तु—

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
गण्डच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति॥

इत्यादौ रसपोषकतया रूपकस्याङ्गत्वं रुचिरम्।

एवं निबध्यमानोऽलङ्कारो रसाभिव्यक्तिहेतुर्भवति, अन्यथा तु रसभङ्गहेतुः।

रसभङ्गोदाहरणानि महाकविनिबन्धेषु प्राप्यान्यपि न दर्शितानि, सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषदर्शनमात्मन एव दूषणं भवतीत्यनौचित्यात्।

अलङ्कारवर्गस्य येयं रसादिव्यञ्जकत्वे दिग्दर्शिता तामनुसरन् सुकविः वस्तुतः सुकवित्वं लभते।

क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः।
शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः॥ २०॥

विवक्षितान्यपरवाच्यध्वनेः प्रथमतो द्वौ भेदौ—शब्दशक्तिमूलः, अर्थशक्तिमूलश्चेति।

नच शब्दशक्तिमूलव्यङ्ग्येऽपरार्थस्य शब्दशक्त्या प्रकाशने विषयापहार एव श्लेषस्य स्यादिति शङ्क्यम्। यतः—

आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते।
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः॥ २१॥

अयमभिप्रायः—वस्तुद्वयस्य शब्दशक्त्या प्रकाशने श्लेषः। यथा—

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः॥[1] इत्यत्र।

---

१. येन ध्वस्तं बालक्रीडायामनः शकटम्। अभवेनाजेन सता। बलिनो दानवान्यो जयति तादृग्येन कायो वपुः पुरामृतहरणकाले स्त्रीत्वं प्रापितः। यश्चोद्वृत्तं समदं कालियाख्यं

आक्षिप्तालङ्कारस्य व्यञ्जनया प्रकाशने तु शब्दशक्तिमूलो ध्वनिरिति भेदात्। भट्टोद्भटदर्शितदिशा अलङ्कारान्तरप्रतिभानेऽपि श्लेषव्यपदेशसत्त्वात्तन्निवारणाय 'आक्षिप्त' इत्यलङ्कारविशेषणम्। तत्र सिद्धमिदम्—यत्र शब्दशक्त्या साक्षादलङ्कारान्तरं वाच्यं सत् प्रतिभासते स श्लेषस्य विषयः, यत्र तु सामर्थ्याक्षिप्तं व्यङ्ग्यमेवालङ्कारान्तरं स ध्वनेः। यथा—

तस्या विनापि हारेण निसर्गादेव हारिणौ।[1]
जनयामासतुः कस्य विस्मयं न पयोधरौ॥

इत्यत्र विस्मयाख्यो भावः, 'अपि'शब्दबलात् साक्षाद्विरोधालङ्कारश्च वाच्यत्वेन प्रतिभासेते इति श्लेषस्यायं विषयः, न तु संलक्ष्यक्रमध्वनेः। असंलक्ष्यक्रमस्य ध्वनेः ( शृङ्गारस्य ) तु वाच्येन श्लेषेण, विरोधेन वा व्यञ्जितस्यायमस्त्येव विषयः।

श्लाघ्याशेषतनुं[2] सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः।
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्म चक्षुर्दधत्
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात्॥

इत्यत्र श्लेषो वाच्यतयैव व्यतिरेकच्छायानुग्राहित्वेन प्रतीयते। यथा च—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥

---

भुजङ्गं हतवान्। रवे शब्दे लयो यस्य। 'अकारो विष्णुः' इत्युक्तेः। यश्चागं गोवर्धनपर्वतं गां च भूमिं पातालगतामधारयत्। यस्य च नाम स्तुत्यमृषय आहुः किं तत्? शशिनं मथ्नातीति, क्विप्, राहुः, तस्य शिरोहरो मूर्धापहारक इति। स त्वां माधवो विष्णुः सर्वदः पायात्। कीदृक्? अन्धकनाम्नां जनानां येन क्षयो निवासो द्वारकायां कृतः। यदि वा मौसले इषीकाभिस्तेषां क्षयो विनाशो येन कृतः। द्वितीयोऽर्थः—येन ध्वस्तकामेन सता बलिजितो विष्णोः सम्बन्धी कायः पुरा त्रिपुरनिर्दहनावसरेऽस्त्रीकृतः शरत्वं नीतः। उद्वृत्ता भुजङ्गा एव हारा वलयाश्च यस्य, मन्दाकिनीं च योऽधारयत्, यस्य च ऋषयः शशिमच्चन्द्रयुक्तं शिर आहुः। हर इति च यस्य नाम स्तुत्यमाहुः, स भगवान्स्वयमेवान्धकासुरस्य विनाशकारी त्वां सर्वदा सर्वकालमुमाया धवो वल्लभः पायादिति। ( लोचनम् )

१. 'हरतो हृदयमवश्यमिति हारिणौ, हारो विद्यते ययोस्ताविति' च।

२. व्यतिरेकपक्षे—सुदर्शनौ करावेव यस्य, चरणारविन्दस्यैव ललितम् ( अन्यत्र—त्रिभुवनाक्रमणक्रीडनम् ), चक्षुरेव चन्द्ररूपम्।

अत्र हि 'भुजग' शब्दार्थपर्यालोचनाबलादेव 'विष' शब्दो जलमभिधायापि न विरन्तुमुत्सहते, अपि तु द्वितीयमर्थं हालाहललक्षणमाह । तदभिधानेन विना अभिधाया एवासमाप्तत्वात् ।

चमहिअ-माणस-कञ्चणपङ्कअ-णिम्महिअ-परिमला जस्स ।
अखण्डिअ-दाण-पसरा बाहु-पलिहा एव्व गइन्दा ॥
( खण्डितमानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य ।
अखण्डितदानप्रसरा बाहुपरिघा एव गजेन्द्राः ॥ )

अत्र हि निराशीकृतत्वेन खण्डितानि शत्रुहृदयान्येव काञ्चनपङ्कजानि तैर्हेतुभूतैः प्रसृतप्रतापा अखण्डितवितरणप्रसरा बाहुपरिघा एव यस्य गजेन्द्रा इति प्रकृतोऽर्थः । गजेन्द्रशब्दवशाच्चमहिअ-परिमल-दानशब्दाः त्रोटन-सौरभमदरूपानर्थान् प्रतिपाद्यापि न परिसमाप्ताभिधाव्यापारा भवन्तीत्युक्तरूपं प्रकृतार्थमप्यभिदधत्येव ।

तेन रूपकच्छायानुग्राही श्लेषो वाच्यतयैवावभासते ।

न केवलमीदृशेषूदाहरणेष्वेव, किन्तु आक्षिप्तोऽप्यलङ्कारो यत्र शब्दान्तरेणाभिहितस्वरूपस्तत्रापि न ध्वनित्वव्यवहारः, किन्त्वलङ्कारत्वव्यवहार एव । यथा—

दृष्ट्या केशव गोप[१]रागहृतया किञ्चिन्न दृष्टं मया
तेनैव स्खलि[२]तास्मि नाथ पतितां[३] किं नाम नालम्बसे ।
एकस्त्वं विषमे[४]षुखिन्नमनसां सर्वाबलानां[५] गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥

यत्र तु सामर्थ्याक्षिप्तमलङ्कारान्तरं शब्दशक्त्या प्रकाशते स सर्व एव ध्वनेर्विषयः । यथा—

"अत्रान्तरे कुसुमसमययु[६]गमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाका[७]लः ।"

---

१. एकत्र-गोधूलिहृतया, अपरत्र-हे गोप = स्वामिन्, रागहृतया = स्नेहहृतया ।
२. एकत्र-पतिता, अन्यत्र खण्डितचरित्रा । ३. अन्यत्र भर्तृभावम् ।
४. निम्नोन्नतेषु, अन्यत्र विषमेषुः = कामः ।
५. अबलानाम् = निर्बलानाम् , अन्यत्र प्रमदानाम् ।
६. समययुगम् = मासद्वयम् , अन्यत्र समयविशेषः ।
७. महाकालः = महासमयः, अन्यत्र शिवः ।

इति गद्ये शिवग्रीष्मयोरुपमा ।

उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥

इति पद्ये मेघस्तनयोरुपमा ।

दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥

इत्यत्र च किरणधेन्वोरुपमा ।

कथमेषूपमा ध्वन्यत इति चेत् शब्दशक्त्याऽप्राकरणिकेऽर्थान्तरे प्रकाशमाने सति वाक्यस्यासम्बद्धार्थता मा भूदिति प्राकरणिकाप्राकरणिकयोरर्थयोरुपमानोपमेयभावः कल्पनीयः । तस्मादर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति श्लेषाद् भिन्न एवास्य ध्वनेर्विषयः ।

न केवलमुपमैव किन्त्वन्येऽप्यलङ्काराः शब्दशक्तिमूले ध्वनौ संभवन्त्येव । यथा-हर्षचरिते स्थाण्वीश्वराख्यजनपदवर्णने—

"यत्र च मत्तमातङ्गगामिन्यः[1] शीलवत्यश्च, गौर्यो विभवरताश्च[2], श्यामाः[3] पद्मरागिण्यश्च[4], धवलद्विज[5]शुचिवदना[6] मदिरामोदिश्वसनाश्च प्रमदाः ।"

इत्यादिगद्ये विरोधो व्यङ्ग्यः । अप्यादिशब्दाभावान्न विरोधस्य वाच्यता, द्वयोरर्थयोरवाच्यत्वाच्च न श्लेषः । विरोधो हि अप्यादिशब्दैः साक्षान्निरूपितोऽलङ्कारतामर्हति । 'च' शब्दोपादानेन 'मत्तमातङ्गे'त्यादिगद्येऽपि दोषमिमं संलक्ष्य—

[7]सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥

---

१. एकत्र गजगामिन्यः, अपरत्र शबरगामिन्यः । २. अन्यत्र विगतमहादेवे स्थाने ।
३. एकत्र यौवनवत्यः, अपरत्र कृष्णाः ।
४. एकत्र पद्मरागरत्नयुक्ताः अपरत्र पद्मसदृशलौहित्ययुक्ताः ।
५. द्विजाः = दन्ताः, ब्राह्मणाश्च । ६. वदनम् = मुखम्, उक्तिश्च ।
७. शरणं गृहमक्षयरूपमगृहं कथम् ? यो न धीशः स कथं धियामीशः ? यो हरिः कपिलः स कथं कृष्णः ? चतुरः पराक्रमयुक्तो यस्य आत्मा स कथं निष्क्रियः ? अरिणामरयुक्तानां यो नाशयिता स कथं चक्रं बहुमानेन धारयति ?

इति स्वीयमुदाहरणं दर्शयति। अत्र वाचकाभावात् स्फुटमेव विरोधस्य व्यङ्ग्यत्वम्। एवंविधध्वनिरूपो व्यतिरेकोऽपि दृश्यते। यथा—

खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखो[1]द्भासिनो
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्ज[2]भासश्च ये।
ये मूर्धस्ववभासिनः क्षितिभृतां[3] ये चामराणां शिरां-
स्याक्रामन्त्युभये[4]ऽपि ते दिनपतेः पादाः श्रिये सन्तु वः॥

इत्यत्र चरणापेक्षया किरणाधिक्यं द्योतयन् व्यतिरेकः। एवमन्येपि।

अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः स प्रकाशते।
यस्तात्पर्येण वस्त्वन्यद्व्यनक्त्युक्तिं विना स्वतः॥ २२॥

अर्थशक्त्युद्भवोऽनुस्वानोपमव्यङ्ग्यो ध्वनिस्तु तत्र भवति यत्रार्थः शब्दपरिवृत्तिं सहमानः स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति। यथा—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती॥

अत्र हि लीलाकमलपत्रगणनं शब्दव्यापारमन्तरैव विवाहवार्त्ताश्रवणेन व्रीडां प्रकाशयति। न च भावध्वनिरसंलक्ष्यक्रम एवेति भ्रमितव्यम्, यत्र विभावादीनां साक्षाच्छब्दनिवेदितत्वं तत्रैव तत्क्रमस्यालक्ष्यत्वात्। यथा—

निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभिरदृश्यत स्थावरराजकन्या॥

इत्यादिकुमारसंभवप्रकरणे।

उक्तोदाहरणे तु पूर्वं व्रीडाख्यव्यभिचारिभावप्रतीतिरनन्तरं च रसप्रतीतिरित्यस्त्येव क्रमः। तस्मादयं संलक्ष्यक्रम एव ध्वनेः प्रकारः।

अत्रेदमवधेयम्—यत्र शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते स नास्य ध्वनेर्विषयः। यथा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥

---

१. नखैरुद्भासन्ते, अन्यत्र गगने न उद्भासन्ते। २. अब्जं पद्मम्, अन्यत्र चन्द्रः।
३. क्षययुक्तानाम्, अपरत्र पर्वतानाम्। ४. किरणाश्चरणौ च।

इत्युदाहरणे लीलाकमलनिमीलनस्य सायंकालव्यञ्जकत्वेऽपि चरणत्रयेण स्वोक्त्या स आविष्कृतः। इदमत्र सारम्—

शब्दार्थशक्त्याऽऽक्षिप्तोपि व्यङ्ग्योऽर्थः कविना पुनः।
यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः ॥ २३ ॥

शब्दशक्त्याविष्कृतस्य व्यङ्ग्यस्य स्वोक्त्या प्रकाशनं यथा—

[1]वत्से मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं
कम्पः को वा गुरुस्ते भवतु बलभिदा जृम्भितेनात्र याहि।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां पयोधिः ॥

इत्यत्र 'प्रत्याख्यानं कारयित्वा' इत्यनेन।

अर्थशक्त्याविष्कृतस्य यथा—

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो
निःशेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथात्र।
अस्मिन् पापाहमेका कतिपयदिवसप्रोषितप्राणनाथा
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥

इत्यादौ।

उभयशक्त्युत्थस्य यथा 'दृष्ट्या केशव' ( पृ० २१ ) इति पूर्वोक्तोदाहरणे। शब्दशक्तिस्तावद् 'गोपरागा'दिशब्दश्लेषवशात्, अर्थशक्तिस्तु प्रकरणवशात्।

प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥२४॥

व्यञ्जकार्थस्य प्रौढोक्तिसिद्धः, स्वतःसंभवी चेति द्वौ भेदौ ( अस्याष्टौ भेदा रसगङ्गाधरे, द्वादश भेदास्तु काव्यप्रकाशे द्रष्टव्याः। )

कविप्रौढोक्तिसिद्धो यथा—

सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे ॥

---

१. पक्षे—विषमत्तीति विषादः शिवः, श्वसनो वायुः, ऊर्ध्वप्रवृत्तोऽग्निः, कम्पोऽपां पतिः वरुणः, को ब्रह्मा, गुरुः बृहस्पतिः, बलभिदा इन्द्रेण, जृम्भितेन ऐश्वर्यमदमत्तेन ( अन्यत्र बलनाशकर्त्र्या जम्भया, आयासकारित्वात् )

( सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान् ।
अभिनवसहकारमुखान् नवपल्लवपत्रलानननङ्गस्य शरान् ॥ )

अत्र वसन्तादेः शरनिर्मातृत्वादिकं केवलं कविकल्पितं वसन्तस्य मदनोद्दीपकत्वं व्यनक्ति ।

कविनिबद्धवक्तृप्रौढोक्तिसिद्धो यथा—

शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।
सुतनु ! येन तवाधरपाटलं पिबति बिम्बफलं शुकशावकः ॥

अत्र कविनिबद्धस्य साभिलाषस्य तरुणस्य वक्तुः प्रौढोक्तौ ज्ञातायामेव व्यञ्जकत्वम्, नान्यथा । यथा वा—

साअर-विइण्ण-जोव्वण-हत्थालम्बं समुण्णमन्तेहिं ।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं तुह थणेहिं ॥

( सादरवितीर्णयौवनहस्तालम्बं समुन्नमद्भ्याम् ।
अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम् ॥ )

अत्रापि 'त्वदीयस्तनावलोकनप्रवृद्धमन्मथावस्थः को न भवती'ति व्यङ्ग्यं कविनिबद्धवक्तृप्रौढोक्त्यैव व्यज्यते ।

यः पुनरौचित्येन संभाव्यमानसद्भावः स स्वतःसंभवी। यथा 'एवं वादिनि (पृ२३) इत्यादौ । यथा वा—

सिहिपिच्छकण्णपूरा जाआ वाहस्स गव्विणी भमइ ।
मुत्ताफल-रइअ-पसाहणाणं मज्झे सवत्तीणम् ॥

( शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति ।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥ )

अत्र व्याधवध्वाः सौभाग्यातिशयः 'शिखिमात्रमारणमेव तदासक्तस्य कृत्यम्, अन्यासु त्वासक्तो हस्तिनोऽप्यमारयत्' इत्यर्थेन व्यज्यते ।

यथा वस्तु व्यज्यते तथैवालङ्कारोऽपि प्रकाशते । एतदेवोक्तम्

अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते ।
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥ २५ ॥

इति कारिकया ।

रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः ।
स सर्वो गम्यमानत्वं बिभ्रद् भूम्ना प्रदर्शितः ।। २६ ।।

वाच्योऽलङ्कारवर्गः प्राचीनैः प्रतिपादित एव, व्यङ्ग्योऽप्युद्भटादिभिः ससन्देहादिषूपमारूपकातिशयोक्तीः प्रकाशयद्भिः स्वीकृत एव । किन्तु

अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ।। २७ ।।

यत्र दीपकादावलङ्कारे उपमादीनां व्यङ्ग्यत्वं तत्रापि तन्मूलकचारुत्वाभावान्न ध्वनिव्यपदेशः । यथा—

चन्दमऊएहिं णिसा णलिणी कमलेहिं कुसुमगुच्छेहिं लआ ।
हंसेहिं सरअसोहा कव्वकहा सज्जनेहि करइ गरुई ॥

( चन्द्रमयूखैर्निशा, नलिनी कमलैः, कुसुमगुच्छैर्लता ।
हंसैश्शारदशोभा, काव्यकथा सज्जनैः क्रियते गुर्वी ॥

इत्यादौ दीपकमेव नोपमाध्वनिः । तस्मादेवंविधे स्थले वाच्यालङ्कारसुखेनैव काव्यव्यपदेशो न्याय्यः ।

यत्र तु वाच्यस्य व्यङ्ग्यपरत्वेनैव व्यवस्थानम्—

प्राप्तश्रीरेष[1] कस्मात्पुनरपि मयि तं मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

इत्यादौ । तत्र तु व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः । एवमेव—

लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मि-
न्स्मेरेऽधुना तव मुखे तरलायताक्षि ! ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जलराशिरयं पयोधिः ॥

---

१. अत्र रूपकं ध्वन्यते ।

इत्याद्युदाहरणेऽपि चन्द्ररूपकस्य व्यङ्ग्यत्वम् ।

वीराणं रमइ घुसिणरुणम्मि ण तहा पिआथणुच्छङ्गे ।
दिट्ठी रिउगअकुम्भत्थलम्मि जह बहलसिन्दूरे ॥

( वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे ।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे ॥ )

इत्यत्र व्यतिरेको वाच्यः, प्रियाकुचकुड्मलाभ्यां गजकुम्भस्थलोपमा तु ध्वन्यते । सैव च प्रधानम् , वीरतातिशयचमत्कारजनकत्वात् ।

तं ताण सिरि–सहोअर–रअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥

( तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् ।
विम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥ )

इत्यत्रातिशयोक्तिर्वाच्यालङ्कारः, सकलरत्नसारतुल्यो विम्बाधर इत्युपमा व्यङ्ग्या । रूपकस्यारोप्यमाणत्वेन अवास्तवत्वान्न रूपकध्वनिः ।

स वक्तुमखिलान् शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥

इत्यत्र अतिशयोक्त्या इष्टप्रतिषेधरूप आक्षेपालङ्कारो ध्वन्यते । रुय्यकमते तु निषेधस्यैवात्र व्यङ्ग्यत्वम् , नाक्षेपस्य, निषेधाभासाभावात् ।

शब्दशक्तिमूलानुरणनरूपार्थान्तरन्यासध्वनिर्यथा—

देव्वायत्तम्मि फले किं कीरइ एत्तिअं पुणा भणिमो ।
कङ्किल्लपल्लवाः पल्लवाणं अण्णाणं ण सरिच्छा ॥

( दैवायत्ते फले किं क्रियतामेतावत् पुनर्भणामः ।
रक्ताशोकपल्लवाः पल्लवानामन्येषां न सदृक्षाः ॥ )

इत्यत्र 'फल'शब्दस्य लाभार्थकत्वमप्रस्तुतमादाय 'फलं दैवायत्त' मित्यप्राकरणिकः सामान्यार्थो व्यज्यते, स च प्रकृतं विशेषमर्थं समर्थयति । न चात्र समप्रवाक्येनाप्रस्तुतप्रशंसाप्रतीतेरनुभवसिद्धत्वात् कथमुच्यतेऽर्थान्तरन्यासध्वनिरिति वाच्यम् ? पदव्यङ्ग्यध्वनेरुदाहरणमेतत् , तेन वाक्यार्थस्यान्यत्र तात्पर्यसत्त्वेऽपि न दोषः ।

अर्थशक्तिमूलार्थान्तरन्यासध्वनिर्यथा—

हिअअट्ठाविअमण्णुं अवरुण्णमुहं वि मं पसाअन्त ! ।
अवरद्धस्स वि ण हु दे बहुजाणअ रोसिउं सक्कम् ॥

( हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन् ! ।
अपराद्धस्यापि न खलु ते बहुज्ञ ! रोषितुं शक्यम् ॥ )

इहापि 'बहुज्ञानामुपरि क्रोधः कर्त्तुं न शक्यः' इति समर्थकं सामान्यं विशेषेण संबद्धं सत् अर्थान्तरन्यासं प्रकाशयति ।

शब्दशक्तिमूलव्यतिरेकस्योदाहरणम् 'खं येऽत्युज्ज्वलयन्ति' (पृ २३) इत्यादि ।

अर्थशक्तिमूलव्यतिरेकस्योदाहरणम् यथा—

जाएज्ज वणुद्देशे खुज्ज व्विअ पाअवो गडिअवत्तो ।
मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ ॥

( जायेय वनोद्देशे कुब्ज एव पादपो गलितपत्रः ।
मा मानुषे लोके त्यागैकरसो दरिद्रश्च ॥ )

अत्र तादृशपुरुषापेक्षया तादृशवृक्षस्य श्रेष्ठत्वस्योपमानोपमेयभावद्वारा प्रतीत्या व्यतिरेको व्यङ्ग्यः ।

उत्प्रेक्षाध्वनिर्यथा—

चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः ॥

अत्र हि मलयमारुतस्य मदनोद्दीपकत्वेन पथिकमूर्च्छाकारित्वस्य तादृशभुजगनिःश्वासानिलमूर्च्छितत्वेनोत्प्रेक्षा व्यङ्ग्या । न चेवादिप्रयोगमन्तरा कथमत्रोत्प्रेक्षेति शङ्क्यम् ? गमकत्वेन इवादेर्वाचकस्याभावेऽपि उत्प्रेक्षाप्रतीतेर्दर्शनात् । यथा—

ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो ।
अज्ज सरिसत्तणं पाविऊण अङ्गे व्विअ ण माइ ॥

( ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः ।
अद्य सदृशत्वं प्राप्याङ्ग एव न माति ॥ )

अत्र स्वतःसिद्धं पूर्णचन्द्रेण दिशां पूरणं मुखसादृश्यप्राप्तिहेतुकत्वेन गम्यते । यथा वा—

त्रासाकुलः परिपतन् परितो निकेतान्
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-
राकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥

अत्र स्वाभाविकं मृगस्यानवस्थानमङ्गनानेत्रशरहतेक्षणश्रीहेतुकत्वेन गम्यते । इत्यादौ गम्योत्प्रेक्षायाः सर्वसम्मतत्वात् ।

श्लेषध्वनिर्यथा—

रम्या इति प्राप्तवतीः पताका[1] रागं[2] विविक्ता[3] इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः[4] समं[5] वधूभिर्वलभीर्युवानः ॥

अत्र वाच्यार्थप्रतीत्यनन्तरं 'वध्व इव वलभ्यः' इत्युपमया श्लेषप्रतीतिः शब्दमन्तराऽपि अर्थसामर्थ्यावसेया ।

यथासंख्यध्वनिर्यथा—

अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः ।
अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च हृदि मदनः ॥

अत्र वाच्यात्तुल्ययोगितासमुच्चयरूपादतिरिक्तं यथासंख्यं यथोद्देशानूद्देशेन प्रतीयते । ध्वन्यमानानामलङ्काराणां किं प्रयोजनमिति चेच्चारुत्वातिशयः । प्रतिपादितमेतत् ।

शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम् ।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतां गताः ॥ २८ ॥

उक्तोदाहरणेषु व्यङ्ग्यत्वेन ध्वन्यङ्गतालङ्काराणां, न तु व्यञ्जकत्वेन । व्यङ्ग्यत्वेऽपि प्राधान्य एव ध्वनित्वम्, अन्यथा गुणीभूतव्यङ्ग्यत्वम् ।

प्राधान्येन व्यङ्ग्या अलङ्काराः कदाचिद् वस्तुमात्रेण, कदाचिच्चालङ्कारेण व्यज्यन्ते । तत्र—

व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तिस्तदाश्रया ॥ २९ ॥

---

१. एकत्र ध्वजपटान्, अन्यत्र रम्या इति प्रसिद्धीः ।
२. संभोगाभिलाषं चित्रशोभां वा, अन्यत्र अनुरागम् ।
३. जनरहिताः, अपरत्र विभक्ताङ्गयः सुन्दर्य इति यावत् ।
४. नमच्छदिपर्यन्तभागाः, अन्यत्र नमत्त्रिवलीकाः । ५. सह ।

वस्तुमात्रेणालङ्काराणां व्यङ्ग्यत्वे न गौणत्वं, किन्तु ध्वनित्वमेव तत्र काव्यव्यवहारस्य तेनोद्देश्येनैव प्रवृत्तत्वात् इति कारिकानिष्कर्षः ।

अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत् ।
चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥ ३० ॥

किन्तु यद्यलङ्कारान्तरेणालङ्कारो व्यज्यते तदा चारुत्वोत्कर्षे सत्येव व्यङ्ग्यस्य प्राधान्यम्, वाच्यालङ्कारचारुत्वे त्वस्य गौणत्वमेव ।

## ध्वन्याभासाः गुणीभूतव्यङ्ग्यानि वा

यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते ।
वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥ ३१ ॥

स्फुटव्यङ्ग्यस्यैव ध्वनित्वम्, अस्फुटस्य तु गुणीभूतत्वम् । स्फुटस्यापि वाच्याङ्गत्वे न ध्वनित्वम् । यथा--

कमलाअरा ण मलिआ हंसा उड्डाविआ ण अ पिउच्छा ।
केण वि गामतडाए अब्भं उत्ताणअं फलिहम् ॥
( कमलाकरा न मलिता[१] हंसा उड्डायिता न च सहसा ।
केनापि ग्रामतडागे अभ्रमुत्तानितं क्षिप्तम् ॥ )

इत्यत्र मेघप्रतिविम्बदर्शनं व्यङ्ग्यमपि वाच्यापेक्षया न चारु । वाच्येनैव वक्त्र्या मुग्धात्वसिद्धेः ।

एवमेव—

वाणीर-कुडङ्गोड्डीण-सउणि-कोलाहलं सुणन्तीए ।
घरकम्म-वावडाए बहुए सीअन्ति अङ्गाइँ ॥
( वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥ )

इत्युदाहरणेऽपि 'दत्तसंकेतः कान्तः कुञ्जं प्रविष्टः' इति व्यङ्ग्यापेक्षया अङ्गसादादि वाच्यमेव चारु ।

---

१. संजातमलाः । इतच् ।

यत्र पुनः प्रकरणादिप्रतिपत्त्या वाच्यस्य व्यङ्ग्याङ्गत्वं व्यङ्ग्यापेक्षया अचारुत्वं वा स ध्वनिः । यथा—

उच्चिणसु पडिअ कुसुमं मा धुण सेहालिअं हलिअसुह्वे ।
अह दे विसमविवाओ ससुरेण सुओ वलअसद्दो ॥

( उच्चिनु पतितं कुसुमं मा धुनीहि शेफालिकां हालिकस्नुषे ।
एष ते विषमविपाकः श्वशुरेण श्रुतो वलयशब्दः ॥ )

अत्र हि बहिः श्रुतवलयकलकलायाः सख्या उक्तेः नायिकाऽविनयाच्छादनार्थत्वाद् व्यङ्ग्याङ्गत्वमेव, तेन ध्वनिः ।

अविवक्षितवाच्ये ध्वनावपीदमवधेयम् ।

अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।
शब्दस्य स तु न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥ ३२ ॥

यत्र लाक्षणिकशब्दानां प्रयोगोऽव्युत्पत्या अशक्त्या वा क्रियते तत्र न ध्वनिरिति ज्ञेयम् । यतः—

सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।
यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥ ३३ ॥

अयमाशयः—व्यङ्ग्यस्य स्फुटत्वेनावभासन एव ध्वनित्वम्, न त्वस्फुटत्वाचारुत्वादौ इति ।

इति द्वितीयोद्द्योतः ॥



# अथ तृतीयोद्द्योतः

द्वितीयोद्द्योते ध्वनेः सप्रभेदं स्वरूपं व्यङ्ग्यमुखेनैव प्रदर्शितम्, तदिदं व्यञ्जकमुखेन प्रकाश्यते ।

अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ।
तदन्यस्यानुरणनरूपव्यङ्ग्यस्य च ध्वनेः ॥ १ ॥

अविवक्षितवाच्यस्य व्यञ्जकमुखेन द्वौ भेदौ—पदप्रकाशत्वम्, वाक्यप्रकाशत्वं चेति अविवक्षितवाच्यस्य अत्यन्ततिरस्कृतवाच्यभेदे पदप्रकाशता यथा—

धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥

अत्र हि समिच्छब्द 'उद्दीपिका' इत्यर्थे लक्षितः, अन्यसाधनवैलक्षण्येन लक्ष्म्युद्दीपनक्षमत्वं च व्यङ्ग्यम् । तदेतदेव पदप्रकाश्यमेव । एवमेव—

कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम् ।

इत्यत्र 'सन्नद्ध'पदम् उद्यतत्वं लक्षयद् निष्कारुणिकत्वाप्रतिकार्यत्वादि व्यनक्ति ।

'किमिव हि मधुराणां मण्डनं नाकृतीनाम्'

इति शाकुन्तलपद्ये च 'मधुराणाम्' इति पदं सर्वानुरञ्जकत्वं लक्षयत् 'सातिशयाभिलाषविषयत्वं नात्राश्चर्य'मिति वक्त्रभिप्रायं ध्वनयति ।

अर्थान्तरसंक्रमितवाच्ये पदप्रकाशता यथा—

प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥

इत्यत्र साहसैकरसत्वोचितकारित्वादिव्यङ्ग्यव्यञ्जकता 'राम'पदस्य । ( कातर्यव्यञ्जकता तु नोचिता, कातरस्य तादृशकरणस्यैवौचित्यात् ) ।

एमेअ जणो तिस्सा देउ कवोलोपमाइ ससिबिम्बम् ।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ ॥
( एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम् ।
परमार्थविचारे पुनश्चन्द्रश्चन्द्र एव वराकः ॥ )

इत्यत्र तु कलङ्कित्वादिधर्मविशिष्टश्चन्द्रो द्वितीयचन्द्रपदस्य लक्ष्यम्, 'कथमपि तुलां नारोहती' ति तु व्यङ्ग्यम्।

अत्यन्ततिरस्कृतवाच्ये व्यङ्ग्यस्य वाक्यप्रकाशता यथा—

या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥

इत्यत्र 'निशायां जागरितव्यम्, अन्यत्र रात्रिवदासितव्य'मित्युपदेशो व्यर्थः सन् बाधितार्थो भवति, तेन लोकोत्तरतां लक्षयत् 'तत्त्वदृष्टाववधानं, मिथ्यादृष्टौ च पराङ्मुखत्वं' ध्वनति, इति तिरस्कृतवाच्यस्य व्यञ्जकत्वम्।

अर्थान्तरसंक्रमितवाच्यस्य वाक्यप्रकाशता यथा—

विसमइओ काँण वि काँण वि वालेइ अमिअणिम्माओ।
काँण वि विसामिअमओ काँण वि अविसामिओ कालो॥

( विषमयितः केषामपि केषामपि प्रत्यात्यमृतनिर्माणः।
केषामपि विषामृतमयः केषामप्यविषामृतः कालः॥ )

इत्यत्र 'विष'शब्दस्य 'दुःखसाधने' 'अमृत'शब्दस्य च 'सुखसाधने' लक्षणा, 'अन्यवैलक्षण्येन तत्त्वं' च व्यङ्ग्यम्। यद्यप्यत्यन्ततिरस्कृतवाच्यस्यैवैतदुदाहरणम् भवितुमर्हति विषादिवाच्यस्यात्र संबन्धाभावात्। तथापि विषामृतपदे लावण्यादिशब्दवन्निरूढे सुखदुःखसाधनयोर्वर्तेते, 'यथा विषं निम्बममृतं कपित्थम्' इत्येतदभिप्रायेण अर्थान्तरसंक्रमितवाच्योदाहरणत्वेन उदाहृते।

विवक्षितवाच्यस्य शब्दशक्त्युद्भवे भेदे पदप्रकाशता यथा—

प्रातुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि।
पथि प्रसन्नाम्बुधरस्तडागः कूपोऽथवा किं न जडः कृतोऽहम्॥

इत्यत्र। अत्र हि 'जडपदं' वक्त्रा स्वविशेषणत्वेन प्रयुक्तमपि शब्दशक्त्या (व्यञ्जनया) कूपविशेषणत्वं प्राप्नोति। तेन द्वितीयार्थस्य (जलरूपस्य) व्यङ्ग्यत्वं पदप्रकाशत्वं च।

अस्यैव वाक्यप्रकाशता यथा—

"वृत्तेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः।"

इत्यत्र हर्षचरितगद्ये 'प्रभाकरवर्धनराज्यवर्धनयोः प्रलये ( नाशे ) धरणीधार-

णाय ( राज्यभारस्वीकाराय ) त्वमवशिष्ट' इति प्राकरणिकेऽर्थे संपन्ने 'कल्पान्ते धरोद्वहनाय त्वमनन्तः' इत्यप्राकरणिकोऽर्थः शब्दशक्त्या प्रतीयते ।

विवक्षितवाच्यस्यैव प्रौढोक्तिसिद्धस्यार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—

चूअंकुरावअंसं छणप्पसरमहग्घमणहरसुरामोअम् ।
असमप्पिअं वि गहिअं कुसुमसरेण महुमासलच्छिमुहम् ॥

( चूताङ्कुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम् ।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीमुखम् ॥)

इत्यत्र 'असमर्पितम्' इतिपदं नवोढदशासूचकं कुसुमशरस्य बलात्कारं व्यनक्ति। वाक्यप्रकाशता तु 'सज्जेहि सुरहिमासो' (पृ २४) इत्यत्र पूर्वोदाहृते पद्ये। अत्र हि 'सज्जयति सुरभिमासो न तावदर्पयत्यनङ्गाय शरान्' इति वाक्यार्थः कविप्रौढोक्तिमात्रसिद्धः वसन्तस्य कामोद्दीपकतातिशयं व्यनक्ति ।

स्वतः सम्भव्यर्थशक्त्युद्भवे पदप्रकाशता यथा—

वाणिअअ हत्तिदन्ता कुत्तो अह्माण वाघकित्ती अ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सुह्मा ॥

( वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तिश्च !
यावल्लुलितालकमुखी गृहे परिष्वकते स्नुषा ॥ )

इत्यत्र । अत्र हि 'लुलितालकमुखी'पदं स्वतःसंभविनोऽर्थस्य शक्त्या व्याधवध्वाः सुरतक्रीडासक्तिं सूचयत् तद्भर्त्तुः सततसंभोगेन दुर्बलतां व्यनक्ति ।

अस्यैव वाक्यप्रकाशता यथा—'सिहिपिच्छ' ( पृ २५ ) इत्यादि । अत्र हि नवपरिणीताया व्याधवध्वाः शिखिपिच्छकर्णपूराया मौक्तिकभूषितानां सपत्नीनां पुरः सगर्वं भ्रमणं पत्यनुरागप्राचुर्यरूपसौभाग्यातिशयं व्यनक्ति, अन्यासां संभोगकाले प्रियस्य करिवरान्निहत्य मौक्तिकानयनसमर्थत्वसूचनात् ।

## पदप्रकाशताविषये विचारः

शब्दसन्दर्भविशेषस्य काव्यस्य ध्वनित्वेन ( उत्तमकाव्यत्वेन ) ध्वनेः ( व्यङ्ग्यस्य ) पदप्रकाशता कथम् ? वाक्यशक्तिवादिनां मते पदानामवाचकत्वात् । नैष दोषः। ध्वनिव्यवहारे पदानां व्यञ्जकत्वमेव प्रयोजकम्, वाचकत्वस्य तु तत्र

नापेक्षा । अपरं च, यथा शरीरिणामवयवसमुदायसाध्यापि चारुत्वप्रतीतिरवयवेषु कल्प्यते, तथैव पदव्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न विरोधी ।

अस्यार्थस्य संग्रहः—

अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम् ।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणम् ॥
पदानां स्मारकत्वेऽपि पदमात्रावभासिनः ।
तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता ॥
विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी ।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ॥

इत्यनेन

## वर्णादीनां व्यञ्जकत्वम्

यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।
वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते ॥ २ ॥

अलक्ष्यक्रमव्यङ्ग्योऽपि ध्वनिः वर्णे, पदे, पदावयवे, वाक्ये रचनायाम्, प्रबन्धे च प्रकाशते । कथं वर्णा व्यञ्जका इति चेत् ।

शषौ सरेफसंयोगो ढकारश्चापि भूयसा ।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः ॥ ३ ॥
त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा ।
तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः ॥ ४ ॥

यदि न स्यात्तेषां व्यञ्जकता तर्हि श्लोकद्वयेन दर्शितं वर्णानां द्योतकत्वं न सिध्येत् । तेनास्त्येव तेषां व्यञ्जकत्वम् ।

अलक्ष्यक्रमव्यङ्ग्यस्य पदप्रकाशता यथा—

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्धितेन दहनेन न वीक्षितासि ॥

इत्यत्र लोचनविशेषणत्वेनोपात्तः 'ते' शब्दो वक्तृगतस्वसंवेद्याव्यपदेश्यानन्तगुणगणस्मरणाकारद्योतको रसस्यासाधारणनिमित्ततां प्राप्तः ।

पदावयवेन द्योतनं यथा—

वीडायोगान्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य ।
तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥

इत्यत्र तृतीयभागार्थक'त्रिभाग'शब्दः गुरुजनसंनिधौ तस्याः साभिलाषदैन्य-मन्युगर्भमधुरं विलोकनं स्मारयन् विप्रलम्भमुद्दीपयति ।

वाक्यप्रकाशोऽलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्द्विधा—शुद्धोऽलङ्कारसंकीर्णश्च । तत्र शुद्धो यथा—

कृतककुपितैर्बाष्पाम्भोभिः[1] सदैन्यविलोकितै-
र्वनमपि गता यस्य प्रीत्या धृताऽपि तथाम्बया ।
नवजलधरश्यामाः पश्यन् दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये स तव प्रियः ॥

इति पद्यवाक्यं परिपुष्टं परस्परानुरागं प्रदर्शयत् विप्रलम्भशृङ्गारं व्यनक्ति । अलङ्कारान्तरसंकीर्णो यथा—

स्मर[2]नवनदीपूरेणोढाः पुनर्गुरुसेतुभि-
र्यदपि विधृतास्तिष्ठन्त्यारादपूर्णमनोरथाः ।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखाः
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥

इत्यादौ । अत्र हि रूपकेणोपस्कृतो विप्रलम्भो व्यज्यते । न चात्र रूपकं न निर्व्यूढं, हंसचक्रवाकादिरूपेण नायकयुगलस्यानिरूपितत्वात् इति शङ्क्यम् ? 'नातिनिर्वहणैषिते'त्यनेन पूर्वमेव दत्तोत्तरत्वात् । अत एव वृत्तौ 'यथोक्तव्यञ्जकलक्षणानुगतेने'तिरूपकविशेषणमुक्तम् ।

---

१. यस्य प्रीत्या तैस्तैर्व्याजैरम्बावचनमपि त्वयोल्लङ्घितं स तव प्रियोऽद्य प्रावृषि त्वां विना विषीदतीति पद्याशयः ।

२. यद्यपि स्मर एव नवनदीपूरस्तेनोढाः साम्मुख्यं नीता अपि गुरुजनरूपैः सेतुभिरवरुद्धा अपूर्णमनोरथास्तिष्ठन्ति तथापि नयनरूपैर्नलिनीनालैरानीतं परस्पराभिलाषरूपं रसं पिबन्तीत्याशयः ।

## प्रसङ्गागतः सङ्घटनाविचारः ।

अलक्ष्यक्रमव्यङ्ग्यो ध्वनिः संघटनायामपि भासत इत्युक्तम्, तेन तावत् संघटनायाः स्वरूपं निरूप्यते—

असमासा समासेन मध्यमेन च भूषिता ।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता ॥ ५ ॥

संघटना त्रिविधा—असमासा, मध्यमसमासा, दीर्घसमासा चेति ।

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा ।
रसाँस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः ॥ ६ ॥

संघटनाया गुणावलम्बित्वं रसव्यञ्जकत्वं च ।

अत्र विचार्यते—(१) किं गुणसंघटनयोरैक्यम् ? अथवा व्यतिरेकः ? व्यतिरेकश्चेत् ( २ ) गुणाश्रया संघटना ( ३ ) संघटनाश्रया वा गुणाः ? इति विकल्पत्रयम् । तत्र 'गुणानाश्रित्य तिष्ठन्ती' इत्यस्यैक्यपक्षे 'आत्मभूतान्गुणान्' इत्यर्थः, संघटनाश्रयगुणपक्षे तु 'आधेयभूतान् गुणान्' इत्यर्थः । गुणाश्रयसंघटना पक्षे पुनः 'गुणपरतन्त्रस्वभावा' इत्यर्थः, छात्रा उपाध्यायाश्रिता इतिवत् ।

किमस्य विकल्पनस्य प्रयोजनमिति चेत् गुणसंघटनयोरैक्ये, गुणानां संघटनाश्रयत्वे वा गुणानामनियतविषयत्वापत्तेः । अस्ति च तेषां नियतविषयत्वम्—माधुर्यप्रसादप्रकर्षस्य करुणादावेव, ओजसो रौद्रादावेव, माधुर्यप्रसादयोस्तु सर्वत्रेति नियतविषयत्वात् । संघटनायास्तु शृङ्गारेऽपि दीर्घसमासानाम्, रौद्रादिष्वपि समासाल्पभावस्य च दर्शनान्न नियतविषयत्वम् । यथा—

'मन्दारकुसुमरेणुपिञ्जरितालका' इति ।
अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखं ते ।
करतलनिषण्णमबले वदनमिदं कं न तापयति ॥

इत्यादौ च शृङ्गारेऽपि दीर्घसमासा संघटना ।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥

इत्यादौ रौद्रादिष्वपि समासाभावः। तस्मान्न गुणाः संघटनारूपा न च संघटनाश्रयाः।

कस्तर्हि गुणानामाश्रयः? अङ्गी व्यङ्ग्योऽर्थः।

तदेतत्—

'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्॥' (२-६)

इति कारिकया पूर्वं प्रतिपादितमेव।

अथवा भवतु गुणानां शब्दधर्मत्वम्, किन्तु शरीरे शौर्यादिवदौपचारिकमेव, न त्वनुप्रासादिवत्। यद्येवं तर्हि तेषां सङ्घटनारूपता सङ्घटनाश्रयता वा प्राप्तैव, असङ्घटितानां शब्दानां गुणाव्यञ्जकत्वात्। मैवम्। वर्णादीनामपि रसव्यञ्जकत्वस्य प्रतिपादितत्वात्। रसादीनां वाक्यव्यङ्ग्यत्वेऽपि कस्याश्चिन्नियतसङ्घटनाया रसाश्रयरूपत्वाभावात्। नन्वसमासघटनाया ओजोऽव्यञ्जकत्वात् कथमिदमुच्यत इति चेत्। प्रसिद्धिमूलकोऽयमाग्रहः। रौद्रादिप्रकाशिका दीप्तिरोजश्शब्दवाच्या, सा यद्यसमासायां सङ्घटनायां स्यान्न कोपि दोषः। न चाचारुत्वम्, 'यो यः शस्त्रम्' इत्यादौ तदनुभवात्। तस्मात् गुणानाम् असङ्घटितशब्दाश्रयत्वे न कापि क्षतिः। चक्षुरादीनामिव यथास्वं विषयनियमेन तेषां स्वरूपस्य न कदाचिद् व्यभिचारः। इत्थं सङ्घटनाया गुणानां च सिद्धं भिन्नत्वम्।

तत्र सङ्घटनामाश्रिता गुणा इत्येकः सिद्धान्तः।

अपरे पुनः सङ्घटनारूपत्वमेव गुणानामातिष्ठन्ते। न च गुणानामनियतविषयत्वं पूर्वोक्तं प्राप्नोतीति वाच्यम्, यत्र लक्ष्ये परिकल्पितविषयव्यभिचारस्तत्र भवतु विरूपता। कुतस्तत्र नाचारुत्वं भातीति चेत्, कविशक्तितिरोहितत्वात्। द्विविधो हि दोषः कवेः—अव्युत्पत्तिकृतः, अशक्तिकृतश्च। तत्र—

अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः।
यस्त्वशक्तिकृतस्तस्य स झटित्येवभासते॥

यथा कुमारसंभवे देवीसंभोगवर्णनं ग्राम्यत्वेन न भासते। प्रतिभानवता कविना संभोगोऽसौ तथा वर्णितो यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददात्यवकाशम्। शक्तिरहितेन तु निबध्यमानस्तादृशः शृङ्गारः स्फुटमेव दोषत्वेन भासते।

तस्माद्भवतु संघटना गुणरूपा वा गुणव्यतिरिक्ता वा, किन्तु 'कुत्र सा कथं विधेया' इत्येवंविधे रचनाया नियमे 'वक्तृवाच्ययोरौचित्य' मेव हेतुः, न तु रसानुसारिता। एकस्मिन्नपि रसे वक्तृवाच्यभेदे रचनाभेदस्यावश्यकत्वात्।

तत्र वक्ता कविः, कविनिबद्धो वा। कविनिबद्धश्चापि रसभावरहितो, रसभावसमन्वितो वा। रसोऽपि कथानायकाश्रयः, प्रतिनायकाश्रयो वा। कथानायकोऽपि धीरोदात्तादिभेदभिन्नः प्रधानो वाऽनुनायकादिर्वेति विकल्पाः।

एवमेव वाच्यमपि रसाङ्गम्, रसाभासाङ्गम्, अभिनेयार्थम्, अनभिनेयार्थम्, देवमुनिप्रभृतिनायकाश्रयम्, मध्यमाधमव्यक्त्याश्रयं वेति बहुप्रकारम्।

कवेः कविनिबद्धस्य वा वक्तुः रसभावादिशून्यत्वे रचनायाः कामचारः। यदा तु वक्ता रसभावसमन्वितः, रसश्च प्राधान्येन विवक्षितः, तदा असमासा मध्यमसमासा वा संघटना विधेया।

करुणविप्रलम्भयोस्त्वसमासैव। दीर्घसमासानां रसप्रतीतिव्यवधायकतया तत्रात्यन्तमभिनिवेशो रसप्राधान्यविवक्षायां परित्याज्य एव, समासानामनेकधा विग्रहीतुं शक्यत्वात्। विशेषतस्तु अभिनेयार्थकाव्ये, करुणे, विप्रलम्भे च। अनयो रसयोः सुकुमारतरत्वाच्छब्दार्थयोर्झटिति प्रतीतिरपेक्ष्यते, न च सा दीर्घसमासेषु शब्दार्थयोरल्पायामप्यस्वच्छतायां भवितुमर्हति।

रौद्रादौ प्रतिपाद्ये तु मध्यमसमासा संघटना, धीरोद्धतनायकसंबन्धिनि वर्णने तु तद्रसोचितवाच्यापेक्षया सा न प्रतिकूला भवतीति दीर्घसमासापि। तदित्थं रचनासु सर्वत्र वक्त्राद्यौचित्यमेव हेतुः।

प्रसादगुणस्तु सर्वरस–सर्वसंघटनासाधारण इत्युक्तमेव। तत्परित्यागे असमासाया अपि रचनायाः करुणाद्यव्यञ्जकत्वम्, तत्सत्त्वे तु मध्यमसमासाया अपि प्रकाशकत्वम्। अतः 'यो यः शस्त्रम्' इत्यत्र केषांचिन्मते ओजसोऽसत्त्वेऽपि प्रसादोऽस्त्येव। तेनाभिप्रेतरसप्रकाशनान्नाचारुत्वम्। माधुर्यशङ्का तु तत्र न विधेया, ओजोमाधुर्ययोर्हि अन्योन्याभावरूपत्वस्य प्राङ्निरूपितत्वात्।

एवं च संघटना गुणरूपा, गुणवती, गुणनिष्ठा वा भवतु। पक्षत्रयेपि वक्त्राद्यौचित्यवशान्नियतविषयता तस्या रसव्यञ्जकत्वं च। END

विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति।
काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा ॥ ७ ॥

वक्त्रादिवदेव विषयाश्रयमौचित्यमपि संघटनां नियमयति। यथा वक्त्रादिवैचित्र्ये सा परिवर्त्यते तथा मुक्तकादिकाव्यरूपविषयवैचित्र्येऽपि सा परिवर्तनीयेति कारिकाया भावः।

काव्यस्य प्रभेदाः *मुक्तकम्, सन्दानितकम्, विशेषकम्, कलापकम्, कुलकम्, पर्यायबन्धः, परिकथा, खण्डकथा, सकलकथा, सर्गबन्धः, अभिनेयार्थम्, आख्यायिका, कथा वेत्येवमादयः। आदिशब्दाच्चम्पूः।

तत्र मुक्तकेषु रसबन्धाभिनिवेशे तदाश्रयमौचित्यम्। अन्यथा कामचारः। मुक्तकेष्वपि सन्ति रसबन्धाभिनिवेशिनः कवयः। अमरुकस्य मुक्तकाः प्रबन्धायमानाः प्रसिद्धा एव। सन्दानितका( युग्मा )दिषु तु विकटनिबन्धौचित्यान्मध्यसमासादीर्घसमासे एव रचने। प्रबन्धान्तर्गतेषु तु युग्मादिषु तत्तत्प्रबन्धौचित्यमेवानुसर्त्तव्यम्।

पर्यायबन्धे ( ऋत्वादिवर्णनात्मके खण्डकाव्ये ) रचना असमासा मध्यमसमासा वा। अर्थौचित्येन कदाचिद्दीर्घसमासायामपि ग्राम्या, परुषा च वृत्तिस्त्याज्या। परिकथायां तु रचनायाः कामचारः, इतिवृत्तमात्रवर्णनात्। प्राकृतप्रसिद्धे खण्डकथा-सकलकथे दीर्घसमासे अपि भवतः, कुलकादिबाहुल्यात्। वृत्यौचित्यं तु यथारसमनुसर्तव्यम्।

सर्गबन्धौ द्विविधौ—रसप्रधानः, इतिवृत्तप्रधानश्च। तत्र प्रथमे यथारसं रचना, अन्यत्र कामचारः। अत्र रसप्रधानस्य श्रेष्ठत्वम्। दृश्यकाव्यं तु रसप्रधानमेव विधेयम्। आख्यायिकाकथयोस्तु गद्यबाहुल्यात् छन्दोबन्धभिन्नप्रस्थानत्वात् मनाङ्नियमभेदः—

* (१) मुक्तकम्—अन्येनानालिङ्गितं स्वतन्त्रं पद्यम्। (२) सन्दानितकं 'द्वाभ्यां पद्याभ्यां क्रियासमाप्तौ। युग्ममिति लोके प्रसिद्धम्। ( ३ ) विशेषकम्-त्रिभिः पद्यैः क्रियासमाप्तौ। एवं (४) चतुर्भिः पद्यैः कलापकम्। (५) पञ्चप्रभृतिभिः पद्यैस्तु कुलकम्। (६) पर्यायबन्धः-वसन्तवर्णनादिरेकवस्तुवर्णनात्मकः। (७)परिकथा-धर्मादिपुरुषार्थमुदिश्य प्रकारवैचित्र्येण अनेकवृत्तान्तवर्णनरूपा। (८) खण्डकथा—एकदेशवर्णनरूपा। (९) सकलकथा-फलोदयपर्यन्तेतिवृत्तवर्णनरूपा। (१०) सर्गबन्धः—महाकाव्यम्। (११) अभिनेयार्थम्—नाटकादिदृश्यकाव्यम्। (१२) आख्यायिका-उच्छ्वासादिविभक्ता संवादात्मिका। (१३) कथा-उच्छ्वासादिरहितेतिवृत्तवर्णनरूपा। गद्यपद्यमयं काव्यं चम्पूः।

एतद् यथोक्तमौचित्यमेव तस्या नियामकम् ।
सर्वत्र गद्यबन्धेऽपि च्छन्दोनियमवर्जिते ॥ ८ ॥
रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता ।
रचना, विषयापेक्षं तत्तु किञ्चिद्विभेदवत् ॥ ९ ॥

यथोक्तम्—वक्त्राद्यौचित्यं, विषयौचित्यं च । तस्याः-रचनायाः । रसबन्धोक्तौचित्यं संश्रिता रचना सर्वत्र भातीत्यन्वयः । तत्तु-औचित्यं तु ।

आख्यायिकायां गद्यस्य विकटबन्धेन चमत्कारितया दीर्घ-मध्यमसमासे एव रचने। शृङ्गारकरुणयोस्तु विकटबन्धो न शोभते । कथायां तु रसबन्धौचित्यम् ।

नाटकादौ त्वसमासैव । विषयानुसारित्वं तु कुत्रापि न विस्मार्यम् ।

**प्रबन्धात्मनोऽलक्ष्यक्रमध्वनेः प्रकाशनप्रकारः ।**

विभावभावानुभावसञ्चार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥ १० ॥
इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम् ।
उत्प्रेक्ष्याऽप्यन्तराभीष्टरसोचितकथोन्नयः ॥ ११ ॥
सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ १२ ॥
उद्दीपनप्रशमने यथावसरमन्तरा ।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ॥ १३ ॥
अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम् ।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ १४ ॥

प्रबन्धे तत्तद्रसोचितविभाव-भावानुभाव-संचारिणाम् औचित्येन चारुणोः शब्दार्थयोर्विधानं प्रधानं मूलम् ।

तत्र विभावौचित्यं प्रसिद्धम् । भावौचित्यं तु प्रकृतीनाम् ( नायकप्रतिनायकादीनाम् ) औचित्यात् । प्रकृतिभेदाश्च दिव्या, अदिव्या, दिव्यादिव्या, उत्तमा, मध्यमा, अधमा चेति । ताम् ( प्रकृतिम् ) अनुसृत्य निबध्यमानो रत्यादिरौचित्यवान् भवति । अन्यथा त्वनुचितः । यथा केवलमानुषस्य राजादेः सप्तार्णवलङ्घनादि नीरसमेव भवति । तत्र चानौचित्यमेव हेतुः ।

ननु सातवाहनादीनां नागलोकगमनादि श्रूयते। तद्यदि राज्ञां प्रभावातिशयवर्णनं क्रियेत तर्हि किमनुचितम्? सत्यम्। किन्तु तदितिवृत्तानुसार्येवोचितम्, न तु तद्व्यतिरिक्तम्। राज्ञां प्रभावातिशयवर्णनं न वयं निषेधामः, किन्तु केवलमनुष्यकथायां दिव्यमौचित्यं न योजनीयमित्यस्माकमभिप्रायः। ये पुनः पाण्डवादयो दिव्यादिव्यास्तेषु तु द्वयमपि योजनीयम्।

अयमत्र परमार्थः—

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा॥

अत एव भरतेन नाटके रामायणादिप्राचीनप्रबन्धेषु प्रसिद्धवस्तूनां प्रख्यातोदात्तनायकस्य च वर्णनमावश्यकमित्युक्तम् (अन्यथाऽद्भुतवृत्तान्तानामनौचित्यापत्तेः)। अनुसृते च तस्मिंस्तादृशचरितानां लोकप्रसिद्धत्वेन कवेर्नानौचित्यं प्रतिभाति। कल्पितवस्तुनि नाटकादौ तु तादृशदिव्यचरितवर्णनं महान् प्रमादः।

न चोत्साहादिवर्णन एव प्रकृतिपरीक्षा, न तु रत्यादाविति वाच्यम्। देवेष्वपि राजादिवद् अग्राम्यशृङ्गारोपनिबन्धस्यावश्यकत्वात्। यथाऽधमप्रकृत्यौचित्येनोत्तमप्रकृतेः शृङ्गारवर्णनं भारतवर्षेऽपि न दृश्यते, तथैव देवेष्वपि तत् परिहर्त्तव्यम्।

न च दृश्यकाव्येष्वेवैतद् विधेयम्, किन्तु श्रव्येष्वपि। तेनोत्तमप्रकृते राजादेर्दैवतादीनां च संभोगवर्णनं पित्रोः संभोगवर्णनमिवानुचितमेव। परस्परप्रेमदर्शनादयो ये संभोगशृङ्गारविषयास्त एव तेषु वर्णनीयाः, न सुरतम्। यत्तु विषयेऽस्मिन् महाकवीनामप्यसमीक्ष्यकारिता दृश्यते स दोष एव, शक्तितिरस्कृतत्वात्तु न लक्ष्यते।

अनुभावौचित्यं भरतादौ प्रसिद्धमेव।

इदमत्र सारम्—भरतादिविरचितां मर्यादां, महाकविप्रबन्धम्, स्वप्रतिभां चानुसृत्य प्राक्तनप्रबन्धेषु विविधासु कथासु सतीष्वपि विभावाद्यौचित्यवदेव वस्तु ग्राह्यम्, नेतरत्। स्वकल्पिते विषये तु कविना सर्वथैवानौचित्यपरिहारः कार्यः। एतदेव प्रबन्धव्यञ्जकत्वम्। अयं चात्र परिकरश्लोकः—

कथाशरीरमुत्पाद्यवस्तुकार्यं तथा तथा।
यथा रसमयं सर्वमेवैतत् प्रतिभासते॥

रामायणादिवृत्तवर्णने तु स्वेच्छैव न योज्या। यदुक्तम्—'कथामार्गे न चाल्पोऽ-

व्यतिक्रमः'। योज्यैव चेत् न रसविरोधिनी। रसानुरोधी तूत्नयो विधेयः, यथा कालिदासादीनामिन्दुमतीस्वयंवरवर्णनादि। न हि कवेरितिवृत्तमात्रनिर्वाहेण प्रयोजनम्, इतिहासादेव तत्सिद्धेः, किन्तु तेन रसपरतन्त्रेण भवितव्यम्। ततश्चेतिहासे यद् रसाननुगुणं तत् परित्यज्य स्वतन्त्रतया रसानुगुणकल्पनेऽपि न दोषः।

शास्त्रोक्तानां सन्ध्यादिनाटकावयवानामपि प्रबन्धे रसानुगुणतयैव निबन्धनमुचितम्, यथा रत्नावल्याम्। न तु शास्त्रमर्यादापालनाय।

यथा युद्धवर्णनावसरे—

लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य।
अध्यासितुं तव चिरं जघनस्थलस्य पर्याप्तमेव करभोरु! ममोरुयुग्मम्॥

इत्यस्य विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य वेणीसंहारे भरतमतानुसरणमात्रेच्छया घटनम्।

इदं चापरं प्रबन्धस्य रसव्यञ्जकत्वे निमित्तम्—यथावसरं रसस्योद्दीपनप्रशमने। यथा रत्नावल्यामेव विभावादिपरिपूरणाय रसस्य उद्दीपनं—'कहं अअं स राआ उदअणो जस्स अहं तादेण दिण्णा' इत्यादि सागरिकाया उक्त्या, प्रशमनं वासवदत्तातः पलायने, पुनरुद्दीपनं चित्रफलकोल्लेखे, प्रशमनं सुसङ्गताप्रवेशे इत्यादि।

अनवरतपरिमृदितो हि रसः सुकुमारमालतीकुसुमवज्झटित्येव म्लानिमवलम्बेत, विशेषतस्तु शृङ्गारः, अतः प्रशमनं विधायैवोद्दीपनीयः।

अङ्गिनो रसस्यानुसंधानं यथा—तापसवत्सराजे वासवदत्ताविषयः प्रेमबन्धः पद्मावतीविवाहादिकथावशादाशङ्क्यमानविच्छेदोऽप्यनुसन्धितः। इत्येतद् द्वयम् प्रबन्धेऽत्यावश्यकम्।

अलंकृतीनां च शक्तावप्यानुरूप्येण योजनं विधेयम्, न तु रसं विस्मृत्य तत्रैव प्रयत्नो विधेयः।

## संलक्ष्यक्रमस्यापि प्रबन्धेषु दर्शनम्

अनुस्वानोपमात्मापि प्रभेदो य उदाहृतः।
ध्वनेरस्य प्रबन्धेषु भासते सोपि केषुचित्॥ १५॥

एवमेव संलक्ष्यक्रमोऽपि प्रबन्धेषु भासते। यथा महाभारते गृध्रगोमायुसंवादादौ।

तत्र हि श्मशानावतीर्णं पुत्रदाहार्थमुद्योगिनं जनं वञ्चयितुं गृध्रो दिवा शवशरीर-भक्षणार्थी प्राह—

अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥

गोमायुस्तु 'निशोदयावधि अमी तिष्ठन्तु ततो गृध्रादपहृत्याहं भक्षयामी'-त्यभिप्रायेणावोचत्—

आदित्योऽयं स्थितो मूढाः ! स्नेहं कुरुत साम्प्रतम् ।
बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन ॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम् ।
गृध्रवाक्यात् कथं बालास्त्यक्ष्यध्वमविशङ्किताः ॥ इत्यादि ।

## पदैकदेशादीनामपि व्यञ्जकत्वम्

अलक्ष्यक्रमविषयेऽवधेयमिदम्—

सुप्-तिङ्-वचन-संबन्धैस्तथा कारकशक्तिभिः ।
कृत्-तद्धित-समासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥ १६ ॥

'च' शब्दान्निपातोपसर्गकालादिभिः । यथा—

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ॥
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ।

अत्र 'मे यदरयः' इत्यत्र सुप्-संबन्ध-वचनानां व्यञ्जकत्वम्, स्वस्याद्वितीयविक्रमत्वं, बहुभिः सह वध्यघातकरूपसंबन्धानौचित्यं च व्यङ्ग्यम् । 'तत्राप्यसौ तापसः' इत्यत्र तद्धितनिपातयोर्व्यञ्जकत्वम्, व्यङ्ग्यं तु देवादीनामसंमुखीभवनं निःसाधनमनुष्यमात्रस्य तथात्वं च । 'अत्रैवे'ति अधिकरणस्य, 'राक्षसबल'मिति कर्मणः, 'हन्ति' 'जीवती'त्यनयोस्तिङोश्च 'असम्भाव्यमानमुपनतमिति पुरुषकारासम्पत्ति'र्व्यङ्ग्यम् । 'धिग्धिक् शक्रजित'मिति श्लोकार्धे च 'शक्रजितम्' 'प्रबोधितवता' इत्यत्र कृतोः, 'ग्रामटिका' इत्यत्र तद्धितस्य, 'स्वर्ग·····'इत्यादि समासस्य, प्रबोधित-विलुण्ठन-

शब्दयोः 'प्र' 'वि' रूपयोरुपसर्गयोश्च व्यञ्जकत्वम् । आत्मपौरुषनिन्दा च व्यङ्ग्यम् ।

एवं व्यञ्जकभूयस्त्वे काव्यं निरतिशयचमत्कारि भवति । यत्र हि एकस्य पदस्य व्यञ्जकत्वेऽपि संघटनासौन्दर्यं तत्र पूर्वोक्तश्लोकादिषु बहूनां व्यञ्जकानां सत्त्वे किमु वाच्यम् । उक्तपद्ये 'रावणः' इति पदं 'निरतिशयपराक्रमविशिष्टत्व'रूपार्थान्तरसंक्रमितवाच्यं सत् पूर्वोक्तव्यञ्जकसमुदायेन सहितं चारुत्वातिशयं पुष्णाति ।

प्रतिभावतां महात्मनां काव्येषु दृश्यन्ते च बहव एवंविधाः प्रकाराः । यथा—

अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वःश्वःपापीयदिवसा पृथिवी गतयौवना ॥

इति व्यासपद्ये 'अतिक्रान्ता'दौ 'क्त' रूपस्य कृतः, 'पापीय' इत्यादौ तद्धितस्य, 'कालाः' इति बहुवचनस्य च शान्तरसव्यञ्जकत्वम्, 'गतयौवने'त्यत्र च तादृशार्थस्य पृथिव्यां बाधितत्वाद् 'उपभोगायोग्यत्वम्' लक्ष्यम्, अत्यन्ततिरस्कृतवाच्यरूपं 'परित्याज्यत्वं' च व्यङ्ग्यम् ।

### व्यस्तानां सुबादीनां व्यञ्जकत्वस्योदाहरणानि

सुबन्तस्य यथा—

तालैः शिञ्जद्वलयसुभगैः कान्तया नर्तितो मे ।
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥

अत्र 'तालैः' इति बहुवचनसुबन्तेन बहुविधतालाभिज्ञतया यक्षपत्न्याः संगीतज्ञत्वं व्यज्यते ।

तिङन्तस्य यथा—

अवसर रोउं चिअ णिम्मिआइँ मा पुंस मे हअच्छीइँ ।
दंसणमेत्तुम्मत्तेहिँ जहिँ हिअअं तुह ण णाअम् ॥
( अपसर रोदितुमेव निर्मिते मा प्रोञ्छ हते अक्षिणी मे ।
दर्शनमात्रोन्मत्ताभ्यां याभ्यां तव हृदयं न ज्ञातम् ॥ )

इत्यत्र 'अपसर' इति तिङन्तेन नायिकाया रोषः, नायकापराधस्यामर्षणीयता च व्यज्येते । यथा वा—

मा पन्थं रुन्धीओ अवेहि बालअ ! अहोसि अहिरीओ ।
अम्हेअ णिरिच्छाओ सुण्णघरं रक्खिदव्वं णो ॥

( मा पन्थानं रुधः, अपेहि बालक ! अहो असि अह्रीकः ।
वयं परतन्त्राः शून्यगृहं रक्षितव्यं नः ॥ )

इत्यत्र 'अपेहि' इत्यनेन 'नायं समयः, गृहे समागन्तव्यम्' इति व्यज्यते ।
संबन्धस्य यथा—

अण्णत्त वच्च बालअ ! ह्णाअन्तिं किं मं पलोएसि एअम् ।
भो जाआभीरुआणं तडं विअ ण होइ ॥

( अन्यत्र व्रज बालक स्नान्तीं किं मां प्रलोकयस्येवम् ।
भो जायाभीरुकाणां तटमेव[1] न भवति ॥ )

इत्यत्र 'जायाभीरुकाणाम्' इत्यनेन जायासंबन्धद्वारा 'यदि मत्प्रणयं वाञ्छसि तर्हि जायाभयं परित्यज' इति व्यज्यते ।

तद्धितस्य तु अल्पाद्यर्थक'क'प्रत्ययवत्तु व्यञ्जकत्वं दृश्यत एव, यथा—'भीरुकाणा'मित्यत्र कुत्सितत्वेनावज्ञातिशयः ।

समासानां तु तत्तद्रसानुकूलपरुषादिवृत्तिसंपादनेन सुप्रसिद्धं तत् ।
निपातानां यथा—

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥

इत्यत्र चकारद्वयेन क्रिययोर्यौगपद्यं तेन च वियोगस्यासह्यतोत्कर्षो व्यज्यते ।
यथा वा—

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥

इत्यत्र 'तु' शब्दः 'पश्चात्तापातिशयं' व्यनक्ति ।

'चा'दिनिपातानां समुच्चयादिद्योतकत्वे प्रसिद्धेऽपि न तदपेक्षयेहोदाहरणम्, किन्तु रसादिव्यञ्जकत्वेनेति ध्येयम् ।

उपसर्गाणां यथा—

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।

---

१ तटमेव = स्थितिस्थलमेव, दृढनिश्चय इति यावत् ।

विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दलेखाङ्किताः ॥

इत्यत्र 'प्र' शब्देनोपलानां स्निग्धतातिशयबोधकेन इङ्गुदीफलानां सरसतातिशयः सूच्यते ।

द्वित्रोपसर्गाणामेकत्र पदे प्रयोगोऽपि रसव्यञ्जनानुगुणत्वे न दोषः । यथा—

'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्रागू जन्तून्'

इत्यत्र 'समुद्वीक्ष्ये' त्यस्मिन् पदे 'सम्–उद्–वी'नां समुदायो भगवतः सूर्यस्य जन्तुविषयकानुकम्पाधिक्यम् । यथा वा–

मनुष्यवृत्त्या समुपाचरन्तं स्वबुद्धिसामान्यकृतानुमानाः ।
योगीश्वरैरप्यसुबोधमीश ! त्वां बोद्धुमिच्छन्त्यबुधाः स्वतर्कैः ॥

इत्यत्र 'सम्–उप–आ' इत्येतेषां समुदायो लोकानुजिघृक्षातिशयं व्यनक्ति ।

निपातानामपि समुदायो रसव्यञ्जकत्वे न दुष्टः । यथा—

सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म नचातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥

इत्यत्र 'अहो–बते'ति समुदायः कामपराक्रमस्यालौकिकत्वप्रकटनद्वाराऽद्भुतरसं व्यनक्ति । यथा वा—

ये जीवन्ति न मान्ति ये स्म वपुषि प्रीत्या प्रनृत्यन्ति च
प्रस्यन्दिप्रमदाश्रवः पुलकिता दृष्टे गुणिन्यूर्जिते ।
हा धिक्कष्टमहो क्व यामि शरणं तेषां जनानां कृते
नीतानां प्रलयं शठेन विधिना साधुद्विषः पुष्यता ॥

इत्यत्र 'हा–धिक्' इति निपातसमुदायो विधिं प्रत्यसूयां तद्द्वारा निर्वेदं च व्यनक्ति ।

एवं पदपौनरुक्त्यमपि । यथा—

यद् वञ्चनाहितमतिर्बहुचाटुगर्भं
कार्योन्मुखः खलजनः कृतकं ब्रवीति ।
तत्साधवो न न विदन्ति, विदन्ति, किन्तु
कर्त्तुं वृथा प्रणयमस्य न पारयन्ति ॥

---

२ आनन्दाश्रुनिर्झरवन्तः पुलकिताः सन्तः ।

इत्यत्र 'विदन्ती'त्यस्य पुनरुक्तिः 'सतामभिज्ञता-दार्ढ्यातिशयं' व्यनक्ति। कालस्य यथा—

समविसमणिव्विसेसा समन्तओ मन्द-मन्द-संआरा।
अइरा होहिन्ति पहा मणोरहाणं पि दुल्लङ्घा॥
(समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः।
अचिराद् भविष्यन्ति पन्थानो मनोरथानामपि दुर्लङ्घ्याः॥)

इत्यत्र 'भविष्यन्ति' इतिपदे कालविशेषाभिधायी प्रत्ययः 'यात्रा न विधेया' इति व्यञ्जयन् प्रवासरूपविप्रलम्भरसपरिपोषहेतुर्भवति। गाथार्थश्चोद्दीपनविभावतया विभाव्यमानो रसवान्।

क्वचित् प्रकृत्यंशोऽपि रसव्यञ्जकः। यथा—

तद् गेहं नतभित्ति मन्दिरमिदं लब्धावगाहं दिवः
सा धेनुर्जरती चरन्ति करिणामेता घनाभा घटाः।
स क्षुद्रो मुसलध्वनिः कलमिदं सङ्गीतकं योषिता-
माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः॥

इत्यत्र 'दिवसैः' इति पदे 'दिवस'रूपा प्रकृतिः कालाल्पतां सूचयन्ती संपत्तेराश्चर्यजनकतां व्यञ्जयति। अस्मिन्नेव पद्ये 'तत्-इदम्' इत्यादि सर्वनामपदानाम् 'अतिदौरवस्थ्य'-'महोत्कृष्टत्वा'द्यर्थव्यञ्जकत्वम्। इदमेव व्यञ्जकत्वं हृदि निधाय कविना 'क्वाकार्यम्'...' इत्यादिवत् 'क्वा'दिशब्दप्रयोगो न कृतः।

अनयैव दिशाऽन्येऽपि व्यञ्जकविशेषा ऊह्याः।

पदवाक्यरचनानां व्यञ्जकत्वोक्त्यैव यद्यपि गतार्थमिदं प्रत्ययादीनां व्यञ्जकत्वम्, तदंशत्वादेषाम्, तथापि वैचित्र्येण व्युत्पत्तये पुनरुक्तम्। यद्यपि केवलसुबादीनां व्यञ्जकत्वं न युज्यते, रसादीनां तदर्थसामर्थ्यमात्रेण (वाक्यरचनादिनिरपेक्षतया) आक्षेपानर्हत्वात्, तथापि अर्थविशेषाणां व्यञ्जकशब्दाविनाभावित्वात् युज्यत एव विभज्य तत्परिज्ञानम्।

यत्रापि शब्दानां प्रवाहपतितत्वेन व्यञ्जकत्वं न प्रतिभासते, तत्रापि अपोद्धृतानां तेषां तदवभासत इति निश्चेतव्यम्। अन्यथा शब्दानां तुल्ये वाचकत्वे चारुत्वविषये विशेषो न स्यात्।

अन्य एवासौ चारुत्वविषयकः पदानां विशेषः सहृदयसंवेद्यः ( न तु त्वदुक्तः ) इति चेत् । किं तावत् सहृदयत्वम् ? रसाद्यनपेक्षकाव्यसमयाभिज्ञत्वं वा, रसादिमय-काव्यस्वरूपज्ञाननिपुणत्वं वा ? आद्ये तथाविधसहृदयव्यवस्थापितानां शब्दविशेषाणां चारुत्वनियमो न स्यात् । अन्येनान्यथापि कल्पयितुं शक्यत्वात् । द्वितीये रसज्ञता-सहृदयत्वयोः पर्यायत्वम् । एवं च रसादिसमर्पकत्वमेव शब्दानां विशेषः, तेन च व्यञ्जकत्वमूलमेव तेषां चारुत्वमिति सिध्यति ।

वाचकतामूलस्तेषां विशेषस्तु प्रसादमात्रम्, अर्थानपेक्षायां त्वनुप्रासादिस्तद्विशेषः । एवं च व्यञ्जकतामूलकमेव शब्दानां चारुत्वमित्यत्र न शङ्कालेशोऽपि ।

## रसविरोधिनोऽर्थाः

प्रबन्धे मुक्तके वापि रसादीन् बन्धुमिच्छता ।
यत्नः कार्यः सुमतिना परिहारे विरोधिनाम् ॥ १७ ॥

कानि पुनस्तानि विरोधीनि ?

विरोधिरससम्बन्धिविभावादिपरिग्रहः ।
विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम् ॥ १८ ॥
अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम् ।
परिपोषं गतस्यापि पौनःपुन्येन दीपनम् ।
रसस्य स्याद् विरोधाय वृत्त्यनौचित्यमेव च ॥ १९ ॥

(१) प्रस्तुतरसापेक्षया विरोधी यो रसस्तत्संबन्धिनां विभावानुभावव्यभिचारिणां परिग्रहः—(क) विरोधिरसविभावपरिग्रहो यथा शान्तरसविभावनिरूपणानन्तरमेव शृङ्गारादिविभाववर्णने । (ख) विरोधिरसव्यभिचारिभावपरिग्रहो यथा प्रणयकलह-कुपितासु कामिनीषु वैराग्यकथाभिरनुनये । (ग) विरोधिरसानुभावपरिग्रहो यथा—प्रणयकुपितायां प्रियायामप्रसीदन्त्यां कोपावेशविवशस्य नायकस्य रौद्रानुभाव-( ताडनादि ) वर्णने ।

(२) प्रस्तुतरसापेक्षया अन्यस्य कथञ्चिदन्वितस्यापि वस्तुनो विस्तरेण कथनम् । यथा—विप्रलम्भशृङ्गारे नायकवर्णने यमकाद्यलङ्काररसिकतया विस्तरेण पर्वतादिवर्णने ।

(३) अकाण्डे विरामो यथा—परां परिपोषपदवीं प्राप्ते शृङ्गारे, विदिते च

परस्परानुरागे, समागमोपायचिन्तोचितं व्यवहारमुत्सृज्य व्यापारान्तरवर्णने ।

(४) अनवसरे रसस्य प्रकाशनं यथा—प्रवृत्त विविधवीरसंक्षये उचितनिमित्तं विनैव शृङ्गारकथोपन्यासे । न च कथापुरुषस्य दैवव्यामोहितत्वादिना तथाचरणं संभवतीति कवेरपि तथा वर्णने न दोष इति वाच्यम् । रसबन्धस्यैव कवित्वव्यवहारप्रयोजकत्वात् । तेन तथाविधं वस्तु परिहार्यमेवेत्येवोचितम् । सर्वथेतिवृत्तानुसरणं नोपयुक्तम्, किन्तु 'आलोकार्थी यथा दीपशिखायां यत्नवान् जनः' (पृ. ५) इत्युक्तदिशा कवेरितिवृत्तवर्णनं रसनिबन्धनोपायमात्रम् । अत एव चेतिवृत्तमात्रवर्णने प्रसक्तानां कवीनां'मस्म त्प्रबन्धे कस्तावदङ्गी रसः, के च रसभावादयस्तदानी'त्यनवबुध्यतामेवंविधानि स्खलितानि भवन्ति ।

ईदशकविशिक्षार्थमेव ध्वन्यालोकरचनाप्रयासोऽपि, न तु केवलं ध्वनिसिद्धये ।

(५) परिपोषं गतस्य रसस्य पौनःपुन्येन दीपनमपि रसभङ्गहेतुः, यत उपभुक्तस्य तस्य पुनः परामर्शः परिम्लानकुसुमकल्पतामापद्यते ।

(६) वृत्त्यनौचित्यं=व्यवहारानौचित्यमपि रसभङ्गहेतुः । यथा नायकं प्रति नायिकाया विलासादिप्रकटनमनुपवर्ण्य तन्मुखेन संभोगाभिलाषकथने । अथवा वृत्तिशब्देन भरतप्रतिपादिताः कैशिक्यादयः, प्रसिद्धा उपनागरिकादयोपि ग्रहीतुं शक्यन्ते, तेन विषयमन्तरैव तन्निबन्धनमपि रसभङ्गहेतुः ।

एवमेषामनयैव दिशा स्वोत्प्रेक्षितानां च रसविरोधिनां सत्कविना सावधानतया परिहारो विधेयः । तेन (१) रसनिबन्धनेऽप्रमादित्वं, (१) कविपदवीविनाशकस्य नीरसप्रबन्धस्य परिहारः, इत्येतद् द्वयं सर्वथा न त्याज्यम् । वाल्मीकिव्यासादिभिः क्षुण्णोऽयं पन्था विशृङ्खलकविनिदर्शनेन नोपेक्षणीयः । तदेतेऽत्र परिकरश्लोकाः—

मुख्या व्यापारविषयाः सुकवीनां रसादयः ।
तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः ॥

नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः ।
स तेनाकविरेवस्यादन्येनास्मृतलक्षणः ॥

पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्त्तयः ।
तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा ॥

वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः ।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः ॥

## विरोधिनां ग्राह्यत्वव्यवस्था

विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम् ।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला ॥ २० ॥

प्रकृतरसपोषाय विरोधिरसादीनां बाध्यत्वेन वा अङ्गभावत्वेन वोक्तौ न दोषः । यथा विप्रलम्भे व्याध्यादीनाम् । अतदङ्गानां तु दोषत्वमेव । किन्तु मरणस्य विप्रलम्भाङ्गत्वे संभवत्यपि तदुपन्यासो नोचितः, आश्रयविच्छेदे सति रसस्यात्यन्तविच्छेदापत्तेः । न च तत्र शोकस्थायिभावस्य करुणस्य तेन परिपोषो भविष्यतीति वाच्यम्, तस्याप्रस्तुतत्वात्, प्रस्तुतस्य शृङ्गारस्य च विच्छेदात् । करुणे प्रस्तुते तु मरणवर्णनं न विरुद्धम् । अचिरेण प्रत्युज्जीवनाशायां तु कदाचिन्मरणोपनिबन्धो नात्यन्तविरोधी, यथा कादम्बर्याम्, दीर्घकालिकस्तु त्याज्य एव ।

लब्धप्रतिष्ठे तु विवक्षिते रसे विरोधिरसाङ्गानां बाध्यत्वोक्तावदोषो यथा—

क्काकार्यं शशलक्ष्मणः क्व च कुलं, भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा,
चेतः स्वास्थ्यमुपैहि, कः खलु युवा धन्योऽधरं धास्यति ॥

इत्यत्र वितर्कस्यौत्सुक्येन, औत्सुक्यस्य मत्या, मतेः स्मृत्या, स्मृतेः शङ्कया, शङ्काया दैन्येन, दैन्यस्य धृत्या, धृतेश्च चिन्तयेति क्रमेण शान्ताङ्गसंचारिणां शृङ्गाराङ्गैः, शृङ्गाराङ्गानां तु शान्ताङ्गैर्बाधेऽपि पर्यन्ते शृङ्गारसंचारिण्या चिन्तया बाधितत्वेन निरूपणाच्छान्ताङ्गानां निबन्धो न दोषावहः । यथा वा महाश्वेतां प्रति प्रवृत्तनिर्भरानुरागस्य पुण्डरीकस्य द्वितीयमुनिकुमारोपदेशवर्णने ।

विरोधिरसाङ्गानां प्रस्तुतरसाङ्गभावस्त्रिधा—स्वाभाविकः, समारोपितः, द्वयोर्विरोधिनोरन्याङ्गत्वे च ।

१—स्वाभाविको यथा—

भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

इत्यत्र ये भावाः करुणाङ्गानि त एव स्वभावेन विप्रयोगाङ्गतां प्राप्ताः ।

२—समारोपितत्वे यथा—

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।

आवेदयति नितान्तं क्षेत्रियरोगं[1] सखि हृदन्तः ॥

इत्यादौ करुणाङ्गान्यपि विप्रलम्भे समारोपितानि ।

एतानि स्वाभाविकत्वेनापि संभवन्तीति द्वितीयोदाहरणमाह—

कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ।
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥

अत्र हि रूपकबलेन रौद्राङ्गानां विप्रलम्भे समारोपः ।

३—विरोधिनोरन्याङ्गत्वे यथा—

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥

इत्यत्र। कथमविरोध इति चेत्, उच्यते–द्वयोरपि तयोरन्यपरत्वेन व्यवस्थानात्, यतो विधेयांशे विरुद्धसमावेशस्य दुष्टत्वम्, नानुवादे । यथा

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥

इत्यत्र आगमनगमनयोर्विधिनिषेधरूपयोः परस्परविरोधेऽपि स्वामिपरतन्त्रदशायामनुवाद्यत्वेन समावेशे न विरोधः, तथेहापि । अत्र हि त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वान्न विप्रलम्भस्य विधीयमानत्वम्, न च करुणस्य । वाक्यार्थाङ्गत्वेन व्यवस्थानाच्च न तयोर्विरोधः ।

न च रसानां वाक्यार्थत्वेनाभ्युपगमात् कथं तेषामनुवाद्यत्वविधेयत्वव्यवहार इति वाच्यम्, रसानां वाच्यार्थाक्षिप्तत्वेन वाच्यार्थसंबन्धिविध्यनुवादयोस्तत्रापि निवारणानर्हत्वात्। ये पुनः साक्षाद् वाक्यार्थतां रसादीनां न स्वीकुर्वन्ति तन्मतेऽपि वाच्यार्थमूलकत्वं तेषामस्त्येवेति न विरोधः। किञ्च, उक्तश्लोके हि अनूद्यमानविभावादिभिरभिव्यक्ताभ्यां परस्परविरोधिरसाभ्यां सहकृताद् विधीयमानांशात् शिवविषयकरतिः प्रतीयते, ततश्च न कश्चन विरोधः। विरोधिनोः कारणकोटिप्रविष्टत्वात्। यथाऽग्नि-

---

१ देहान्तरे चिकित्स्यो रोगः क्षेत्रियरोगः, असाध्य इति यावत् ।

जलयोः परस्परविरोधेऽपि तत्सहकारेण ओदनादिरूपकार्योत्पत्तिर्दृश्यते, तथैवेहापि करुण—विप्रलम्भयोर्विरोधेऽपि शिवप्रभावातिशयरूपकार्योत्पत्तौ न विरोधः । वृत्तिगतस्य 'विरुद्धफलोत्पादनहेतुत्वम्' 'कारणस्य विरुद्धत्वम्' इत्यादेरयमर्थः—यत् सहकारिशून्यमेकं कारणं न परस्परविरोधिफलद्वयोत्पादने युगपत् प्रभवति—यथा केवलं जलं परस्परविरोधिनं तापं च क्लेदं चोभयमपि न जनयितुं शक्नोति, न तु विरोधिद्वयस्य सहकारिता कारणे निषिध्यते ।

न च श्रव्यकाव्ये परस्परविरोधस्य विध्यनुवादविषया समाधानेऽपि दृश्यकाव्ये परस्परविरोधिपदार्थाभिनयः कथं प्रयोक्तुं शक्यत इति वाच्यम् । 'एहि गच्छ' इत्यादौ यथा युगवद्विरुद्धयोरपि गमनागमनयोः क्रमेणाभिनयनात् न विरोधः, संभूय च उभयकरणे ते पारतन्त्र्यं प्रकाशयतः, तथेहापि पृथक् पृथक् प्रयुक्तमुभयमपि संभूयाङ्गिनः प्रकाशने समर्थं भविष्यतीति न विरोधः । किञ्च, प्रभावातिशयवर्णने तत्प्रतिपक्षसंबन्धी करुणो रसो बाधितः सन् न वैक्लव्यं जनयति, प्रत्युत प्रीत्यतिशयस्य निमित्ततामापद्यते, तेन न कश्चिद्दोषः ।

अतः प्रधानरसस्य विरोधी रस एव विरोधिशब्दव्यपदेश्यः, न त्वङ्गभूतस्य रसादेः । इत्येकं समाधानम् ।

अपरं च श्रूयताम् । प्रकृतिमधुराः पदार्थाः शोचनीयतां प्राप्ताः संस्मृताः सन्तः शोकवेगमुपजनयन्तीति प्रधानेऽपि करुणे तादृशश्रृङ्गारवस्तु रसपरिपोषायैव जायते । यथा—

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥

इत्यत्र । तथैवोक्तश्लोके शाम्भवशराग्नेः कामिव्यवहारवर्णनं त्रिपुरयुवतिदुर्दशां सूचयतीत्यतोऽपि न विरोधः । तेन सूक्ष्मविचारे नोक्तश्लोके कश्चिद्दोषः ।

एवमेव—

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥

इत्यादावपि निर्विरोधत्वम् । प्रधाने राजविषयकरतिभावे श्रृङ्गारकरुणयोरङ्गत्वात् ।

## प्रबन्धे एक एव रसोऽङ्गी विधेयः

प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने ।
एको रसोऽङ्गी कर्तव्यस्तेषामुत्कर्षमिच्छता ॥ २१ ॥

महाकाव्यनाटकादिषु यद्यपि बहवो रसा उपनिबध्यन्ते, तथापि चमत्कारातिशयमिच्छता कश्चिदेक एव रसोऽङ्गित्वेन निवेशनीयः ।

ननु बहुषु रसेषु परिपोषं गतेषु कथमेकस्याङ्गिता न विरुध्यते ?

रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः ।
नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः ॥ २२ ॥
कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते ।
तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥ २३ ॥

स्थायिनो रसस्य पुनः पुनरनुसंधानात्सकलप्रबन्धव्यापित्वेन मध्ये स्फुरितै रसान्तरैः सह समावेशो न विरुध्यते । यथैकमेव प्रधानेतिवृत्तं मध्ये कथान्तरसत्त्वेऽपि सकलं प्रबन्धं व्याप्य तिष्ठति, तथैव मध्ये रसान्तरप्रतीतिरप्यङ्गिनः प्राधान्यं न नाशयति । प्रत्युत विवेकिनां सहृदयानामाह्लादातिशयं जनयति । यथोक्तम्—

गुणः[1] कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥ इति ।

ननु अनेन प्रकारेण वीरशृङ्गारादीनां विरोधिनामङ्गाङ्गिभावः स्यात्, न पुनः बाध्यबाधकतापन्नानां शृङ्गारबीभत्सादीनाम्, रत्याद्युच्छेद एव जुगुप्सादीनां प्रवृत्तेः । उच्यते—

अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे ।
परिपोषं न नेतव्यस्तथा स्यादविरोधिता ॥ २४ ॥

रसान्तरे शृङ्गारादौ प्रबन्धव्यङ्ग्ये सति अविरोधी विरोधी वा रसः परिपोषं न नेतव्यः । परिपोषपरिहारस्त्रिधा—(१) अविरोधिनोऽङ्गरसस्याङ्गिरसापेक्षया आधिक्यं न विधेयमिति प्रथमः ।

---

१. गुणः = अङ्गभूतः, कृतात्मसंस्कारः = परिस्कृतः सन् , प्रधानस्य = अङ्गिनः, भूयांसमुपकारं करोतीति भावः ।

उत्कर्षसाम्यं तु न निषिध्यते । यथा—

एकन्तो रुअइ पिआ अण्णन्तो समरतूरणिग्घोसो ।
णेहेण रणरसेण अ भडस्स दोलाइअं हिअअम् ।

( एकतो रोदिति प्रिया अन्यतः समरतूर्यनिर्घोषः ।
स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥ )

इह 'दोलायितम्' इति पदेनोभयोः साम्येऽपि न दुष्टता प्रतीयते । यथा वा—

कण्ठाच्छित्वाक्षमालावलयमिव करे हारमावर्तयन्ती
कृत्वा पर्यङ्कबन्धं विषधरपतिना मेखलाया गुणेन ।
मिथ्यामन्त्राभिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा
देवी सन्ध्याभ्यसूयाहसितपशुपतिस्तत्र दृष्टा तु वोऽव्यात् ॥

इत्यत्रापि शान्तश्रृङ्गारयोः साम्येऽपि न दोषः ।

(२) अङ्गिरसविरुद्धानां व्यभिचारिणां प्राचुर्याभावः, क्षिप्रमेवाङ्गिरसव्यभिचार्यनुवृत्तिर्वेति[1] द्वितीयः ।

यथा—'कोपात्कोमललोल' ' '(पृ० १८)इति पूर्वोदाहृते श्लोके रतावङ्गत्वेनोपनिबद्धस्यामर्षस्य क्षिप्रमेव 'रुदत्ये'ति 'हसन्नि'ति च रत्युचितेर्ष्यौत्सुक्यहर्षानुसन्धानम् ।

(३) परिपोषं नीयमानस्याप्यङ्गत्वेन पुनः पुनः प्रत्यवेक्षा इति तृतीयः । अनया दिशान्येपि प्रकारा ऊह्याः ।

सेयमविरोधिरसपरिपोषपरिहारव्यवस्था । विरोधिरसस्य तु यथासंभवं परिपोषे विहितेपि अङ्गिरसापेक्षया न्यूनतैव विधेया ।

एतच्चापेक्षिकं प्रकर्षयोगित्वमङ्गिनो रसस्य रसानामङ्गाङ्गिभावमस्वीकुर्वद्भिरपि न निषेद्धुमर्हम् । इदं हि 'रसो रसान्तरस्य व्यभिचारी भवती'ति मतेनोक्तम् । 'एवंविधेषु स्थलेषु स्थायिनो भावा एव उपचाराद् रसशब्देनोच्यन्त' इति मते तु नास्त्येवाङ्गताया विरोधः ।

सोयं सर्वोपि विरोधिनामविरोधिनां च साधारणोऽविरोधोपायः ।

---

१. ,अत्र 'वा' ग्रहणमुत्तरपक्षदार्ढ्यं सूचयति न विकल्प'मिति लोचनम् । तस्यायमभिप्रायः—केवलमङ्गिरसविरुद्धानां व्यभिचारिणां प्राचुर्याभावेन न विरोधपरिहारः, किन्तु क्षिप्रप्रमेवाङ्गिरसव्यभिचार्यनुवृत्त्यैव । अत एवायमेकः प्रकारः, अन्यथातु द्वौ स्याताम् ।

केवलविरोधिविषये त्विदमवधेयम्—

विरुद्धैकाश्रयो यस्तु विरोधी स्थायिनो भवेत् ।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥ २५ ॥

विरोधी द्विविधः—ऐकाधिकरण्यविरोधी, नैरन्तर्यविरोधी च । तत्र पूर्वो यथा वीरेण भयानकः, उत्साहभययोरेकस्मिन्नाश्रये विरुद्धत्वात् । स विभिन्नाश्रयः कार्यः अर्थात् नायके वीरः, प्रतिनायके तु भयं वर्णनीयम् । तेन नायकसंबन्धिपराक्रमोत्कर्षो द्योतितो भवति ।

एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान् ।
रसान्तरव्यवधिना रसो व्यङ्ग्यः सुमेधसा ॥ २६ ॥

नैरन्तर्यविरोधी तु रसान्तरव्यवधानेन प्रबन्धे निवेशयितव्यः, यथा नागानन्दे शान्तशृङ्गारयोर्मध्येऽद्भुतरसो निवेशितः ।

### शान्तरसविचारः

ननु कोसौ शान्तो रसः ? उच्यते । तृष्णाक्षयसुखरूपः । यदुक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

न च तृष्णाक्षयस्य सर्वजनानुभवगोचरता नास्तीत्यसत्त्वं तस्येति वाच्यम् ? महानुभावचित्तवृत्तिविशेषरूपस्य तस्य प्रतिक्षेपानर्हत्वात् । तथा सति अन्येऽपि केवलमहानुभावेषु वर्तमानाश्चित्तवृत्तिविशेषा निषिध्येरन्निति भावः । (न च वीरेऽन्तर्भावः, वीरस्याभिमानमयत्वात्, अस्य चाहङ्कारप्रशमैकरूपत्वात् । सत्यप्येवंविधे विशेषे यद्यैक्यम्, तर्हि वीररौद्रयोरपि तत् स्यात् । दयावीरादीनां तु अहङ्काराभावे शान्तभेदत्वम्, अन्यथा तु वीरभेदत्वम्, न तु शान्तस्य तत्रान्तर्भावः ।)

तदेवमस्ति शान्तो रसः ।) तस्य च यथा नागानन्दे शृङ्गाराविरोधित्वं संपादितं तन्निदर्शितमेव ।

तदेवम्—

रसान्तरान्तरितयोरेकवाक्यस्थयोरपि ।
निवर्त्तते हि रसयोः समावेशे विरोधिता ॥ २७ ॥

यथा—

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः ।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः ॥

सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान् ।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः ॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम् ।
निर्दिश्यमानांल्ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन् ॥

इत्यादौ शृङ्गारबीभत्सयोः ( मतान्तरेण रतिजुगुप्सयोः ) वीररसव्यवधानेन समावेशो न विरोधी, किं पुनर्निबन्धे ।

विरोधमविरोधं च सर्वत्रेत्थं निरूपयेत् ।
विशेषतस्तु शृङ्गारे सुकुमारतमो ह्यसौ ॥ २८ ॥
अवधानातिशयवान् रसे तत्रैव सत्कविः ।
भवेत्तस्मिन् प्रमादो हि झटित्येवोपलक्ष्यते ॥ २९ ॥

सेयमत्र विरोधाविरोधनिरूपणरीतिः, शृङ्गारे त्वियं सर्वथा न विस्मर्त्तव्या, स हि मनागपि विरोधिसमावेशं न सहते ।

शृङ्गाररसस्य सर्वानुभवविषयत्वात् तत्र प्रमादो झटित्यवभासते । तेन सत्कविना तन्निरूपणेऽतिसावधानेन भवितव्यम् ।

विनेयानुन्मुखीकर्त्तुं काव्यशोभार्थमेव वा ।
तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति ॥ ३० ॥

सदाचारोपदेशादिषु, शोभावृद्धये वाऽपि विरोधिरसाङ्गत्वेन शृङ्गाराङ्गसमावेशो न विरोधी । यथा—

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥

इत्यादौ न रसविरोधः ।

एतदिह पर्यवसितम्—

विज्ञायेत्थं रसादीनामविरोधविरोधयोः ।
विषयं, सुकविः काव्यं कुर्वन् मुह्यति न क्वचित् ॥ ३१ ॥
वाच्यानां[1] वाचकानां[2] च यदौचित्येन योजनम् ।
रसादिविषयेणैतत् कर्म मुख्यं महाकवेः ॥ ३२ ॥

---

१. इतिवृत्तविशेषाणामित्यर्थः । २. शब्दानाम् ।

अयमेव हि महाकवेर्मुख्यो व्यापारो यद् रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम् ।

रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः ।
औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्थिताः ॥ ३३ ॥

भरतादयोऽपि रसानुगुणशब्दार्थयोजनं स्वीकुर्वन्त्येव । यतस्ते कैशिक्याद्या अर्थवृत्तीः, उपनागरिकाद्याः शब्दवृत्तीश्चाभ्युपगच्छन्ति । रसाद्यनुगुण औचित्यवान् यो व्यवहारस्ता एव चैता वृत्तयः । रसादितात्पर्येण निवेशिता एव हि वृत्तयः काव्यस्य नाट्यस्य च शोभामावहन्ति, यतस्तासां द्विविधानामपि वृत्तीनां रसादयो जीवितभूताः, इतिवृत्तादिकं तु केवलं शरीरभूतम् ।

## रसादीनां वाच्याद्यनन्तरभावित्वसाधनम्

अत्र केचित्—रसादीनामितिवृत्तादिभिः सह गुणगुणिव्यवहारः, न तु जीवशरीरव्यवहारः । वाच्यस्य रसादीनां च शरीरे गौरत्वादिवत् अपृथक्प्रतीतेः । नैवम् । एवं सति यथा शरीरे गौरत्वं सर्वस्य प्रतिभासते तथा रसादयोऽपि वाच्येन सहैव सर्वस्य प्रतिभासेरन्, न त्वेवम्, सहृदयस्यैव रसादिप्रतीतेः । अत एव प्रथमोद्द्योते 'शब्दार्थशासनज्ञानमात्रेणैव न बुध्यते' इत्युक्तम् ।

न च यथा रत्नानां जात्यत्वं ( उत्कृष्टजातिमत्त्वं ) विद्यमानमपि विशेषज्ञानामेव भासते, न सर्वेषाम्, तथा वाच्यस्य रसादिमयत्वमपि न सर्वप्रतीतिविषय इति वाच्यम् । एवं सति जात्यत्वस्य रत्नानतिरिक्तत्वमिव रसादेरपि विभावादिवाच्यानतिरिक्तत्वमेव स्यात् । न चैवम् । विभावादय एव रसा इत्यनवगमात् । अत एव हि विभावादीनां कारणत्वं रसस्य च कार्यत्वं स्वीक्रियते । तेन तेषां पूर्वपश्चाद्भावरूपः क्रमोऽवश्यं विद्यते, किन्तु लाघवात् स न लक्ष्यते, अत एव ते अलक्ष्यक्रमव्यङ्ग्या इत्युक्तम् ।

ननु प्रकरणादिसहकृतः शब्द एव वाच्यप्रतीतिसमकालमेव व्यङ्ग्यप्रतीतिमपि जनयतीति किं क्रमकल्पनया ? न च व्यञ्जकत्वस्य वाच्यप्रतीतिमूलकत्वेन वाच्यप्रतीत्यनन्तरं व्यङ्ग्यप्रतीतिसत्त्वात् क्रमोऽवश्यं भावीति वाच्यम् । गीतादिशब्देभ्यो वाच्यपरामर्शं विनैव रसप्रतीतिदर्शनात् । तेन व्यर्थैव वाच्यप्रतीतेर्व्यङ्ग्यप्रतीतिं प्रति कारणत्वकल्पना ।

नैवम् । यद्यपि त्रयं प्रकरणादिसहकृतशब्दानां व्यञ्जकत्वं स्वीकुर्मः, तथापि नैतेन वाच्यव्यङ्ग्यप्रतीत्योः पूर्वापरभावित्वहानिः । तथाहि—द्विविधं शब्दानां व्यञ्जकत्वम्—कदाचित् स्वरूपविशेषशक्त्या श्रवणमात्रेण यथा गीतादौ, कदाचित्तु अभिधाजन्यवाच्यार्थपरामर्शेण यथा काव्यादौ, तेन गीतादौ वाच्यार्थपरामर्शस्य व्यङ्ग्यप्रतीतौ कारणत्वाभावेऽपि काव्यादौ वाच्यार्थपरामर्शस्य व्यङ्ग्यं प्रति कारणत्वमनिवार्यमेव । तेनास्त्येव क्रमः, अतिलघुत्वात्तु न लक्ष्यते । यदि तु गीतादाविव काव्यादावपि शब्दश्रवणमात्रेण रसादिप्रतीतिः स्यात् तर्हि प्रकरणमजानतामव्युत्पन्नश्रोतॄणां काव्यश्रवणमात्रेण सा कुतो न स्यात् ? तेन वाच्यार्थज्ञानपूर्वैव व्यङ्ग्यार्थप्रतीतिरिति सिद्धम् ।

न च वाच्यव्यङ्ग्यप्रतीत्योः सहभाव इति वाच्यम्, एवं सति वाच्यप्रतीतेर्व्यङ्ग्यप्रतीतौ कारणत्वेनोपयोगो न स्यात् । कारणस्य कार्यनियतपूर्ववृत्तित्वात् । अस्ति चोपयोगः, तेन न सहभावः । स्वरूपमात्रेण व्यञ्जके गीतादावपि पूर्वं शब्दस्वरूपप्रतीतिस्ततश्च रसानुभवः, इत्यस्त्येव क्रमः, तथैवेहापि प्रथमं वाच्यार्थपरामर्शः, ततश्च व्यङ्ग्यार्थबोध इत्यनिवार्य एव क्रमः । किन्तु स क्रमः रसादीनां वाच्यार्थविलक्षणत्वेऽपि आशुभावित्वान्न लक्ष्यते ।

न चाप्ययं सर्वत्रालक्ष्यक्रम एव, किन्तु क्वचिल्लक्ष्यतेऽपि, यथा अनुरणनरूपव्यङ्ग्यप्रतीतिषु । तथाहि द्विविधं तावदनुरणनरूपव्यङ्ग्यम्—शब्दशक्तिमूलं च, अर्थशक्तिमूलं च । तत्र अर्थशक्तिमूले वाच्यस्य तत्सामर्थ्याक्षिप्तस्य व्यङ्ग्यस्य च कार्यकारणभावो निह्नोतुमशक्यः, तेन स्पष्टमेव पौर्वापर्यम् । उदाहृतञ्चैतत् प्रथमोद्द्योते प्रतीयमानार्थसिद्ध्यर्थमुदाहृतासु गाथासु ।

शब्दशक्तिमूलेऽपि

'गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु' ( पृ. २२ )

इत्यादौ 'गो'शब्देन 'किरणधेनु'रूपार्थद्वयप्रतीतौ सत्यामुपमावाचकपदविरहे योपमानोपमेयत्वप्रतीतिः, सार्थसामर्थ्येनाक्षिप्तैवेत्यस्त्येव स्पष्टं वाच्यस्य व्यङ्ग्यालङ्कारस्य च प्रतीत्योः पौर्वापर्यम् । सेयं वाक्यप्रकाशशब्दशक्तिमूलव्यङ्ग्ये व्यवस्था ।

पदप्रकाशे शब्दशक्तिमूलव्यङ्ग्येऽपि अर्थद्वयसंबन्धयोग्यस्य विशेषणपदस्य यथेवादियोजकपदाभावेपि अप्रकृतार्थेन सह योजनमर्थाक्षिप्तमिति पूर्ववदेव वाच्यस्य व्यङ्ग्यालङ्कारस्य च प्रतीत्योः पौर्वापर्यं सुस्थितमेव ।

वस्तुतस्तु सेयमुभयार्थसम्बन्धवती प्रतिपत्तिरुक्तरीत्या अर्थाक्षिप्तत्वादार्थ्येव। किन्तु ( काव्यप्रकाशाद्युक्तैः ) संयोगाद्यैर्नियन्त्रितायाः शब्दशक्तेः प्रतिप्रसवरूपत्वात् 'शब्दशक्तिमूला' इति कल्प्यते। तेनात्रापि वाच्यप्रतीत्यनन्तर एव व्यङ्ग्यप्रतीतिरित्यस्त्येव क्रमः।

लक्षणामूले ( अविवक्षित वाच्ये ) ध्वनौ तु वाच्यार्थबाधप्रतीतिपूर्वक एव लक्ष्यार्थबोधः, तदनन्तरं तु व्यङ्ग्यार्थबोध इति क्रमस्य नियतत्वमेव। तत्र वाच्यस्याविवक्षितत्वात्तु क्रमविचारो न कृतः।

इत्थं च यथा शब्दश्रवणस्य वाच्यार्थबोधस्य च स्पष्टः पूर्वापरभावस्तथैव वाच्यव्यङ्ग्यप्रतीत्योरपि निमित्त-निमित्तिभावात् पूर्वापरभावः सिद्धः। स च क्वचिल्लक्ष्यः, क्वचिच्चालक्ष्य इत्यन्यदेतत्।

## शब्दस्य व्यञ्जकत्वसाधनम् ( व्यञ्जनास्थापनम् )

इह हि शब्दादीनां व्यञ्जकत्वं प्रदर्श्य तन्मुखेन ध्वनिभेदाः निरूपिताः। व्यञ्जकत्वं चेदं व्यङ्ग्यार्थबोधजनकत्वमेव भवेत्, व्यङ्ग्यत्वं च व्यञ्जकजन्यबोधविषयत्वं स्यात्। एवं च व्यञ्जकत्वबोधाधीनो व्यङ्ग्यत्वबोधः, व्यङ्ग्यत्वबोधाधीनश्च व्यञ्जकत्वबोधः इत्यन्योन्याश्रयः समापतति। तदुद्धारस्तु—व्यङ्ग्यस्य वाच्यव्यतिरिक्तता प्रथमोद्द्योते ध्वन्यभावनिराकरणप्रसङ्गे साधिता तेन व्यङ्ग्यत्वबोधस्य व्यञ्जकत्वबोधानधीनत्वान्नैष दोष इति।

अत्र शङ्कते-प्रथमोद्द्योतोक्तयुक्तिभिर्वाच्यव्यतिरिक्तं किमपि वस्तु साधितं भवद्भिः, किन्तु नैतद् व्यङ्ग्यतया व्यपदेष्टुमर्हम्। यतो यत्रैतत् प्राधान्येन वाक्यार्थभूतम्, तत्र वाच्यत्वेनैवास्य व्यपदेशो युक्तः, वाक्यस्य तत्रैव तात्पर्यात्। या तु मध्ये वाच्यान्तरप्रतीतिः, सा तु तत्प्रतीतेरुपायमात्रम्, यथा मीमांसकानां नये वाक्यार्थप्रतीतेरुपायः पदार्थप्रतीतिः।

अत्रोच्यते—'गतोऽस्तमर्कः' इत्यादिः शब्दो यत्र 'तेजोबिम्बस्यादर्शन'रूपं वाच्यमर्थं 'पण्यवस्तूनि समाह्रियन्ताम्' इत्याद्यर्थान्तरं च भिन्नभिन्नतया बोधयति तत्र वाच्यार्थाभिधायित्वस्य ( अभिधायाः ) अर्थान्तरबोधहेतुत्वस्य ( व्यञ्जनायाः ) च अभेदो वा भेदो वा भवद्भिः स्वीक्रियते ?

तयोर्व्यापारयोर्नाभेदः, विषयभेदात्, रूपभेदाच्च।

विषयभेदस्तावत् सुप्रसिद्धः, अभिधाया विषयो वाच्यार्थः, व्यञ्जनायास्तु अर्थान्तराणि। न च तस्य तेषां चाभेदः, यतो वाच्यार्थः साक्षाच्छब्दस्य संबन्धी, अर्थान्तराणि तु वाच्यार्थसामर्थ्याक्षिप्तानीति संबन्धिसंबन्धीनि, अन्यथा अर्थान्तरत्वमेव तेषां न स्यात्। तेन स्पष्टो विषयभेदः।

अभिधाव्यञ्जनयो रूपभेदोऽपि स्पष्टः, अभिधाया वाचकशब्देष्वेव सत्त्वात्, व्यञ्जनायास्तु वाच्यार्थरहितेषु गीतशब्देषु ( रागेषु ), अशब्देषु चेष्टादिषु च सत्त्वात्। दृश्यते च—

> व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
> बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य।
> तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
> मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः॥

इत्यादिषु चेष्टया अर्थप्रकाशनम्। तेन न तयोर्व्यापारयोरभेदः।

भेदश्चेत्, अर्थसामर्थ्याक्षिप्तस्यार्थान्तरस्य न वाच्यत्वम्, किन्तु व्यङ्ग्यत्वमेव, अभिधायाः स्वार्थबोधे समाप्तत्वादर्थान्तरबोधहेतुत्वस्य प्रकाशन( व्यञ्जन )शब्देनैवोक्तेरुचितत्वात्।

न च पदार्थवाक्यार्थदृष्टान्तोऽप्यत्र संगच्छते। तात्पर्यवृत्तेः सर्वसंमतत्वाभावात्। यैश्च सा स्वीक्रियते, तेषु वैयाकरणमते तस्याः न पारमार्थिकत्वम्, किन्तु वाक्यार्थबोधसाधनरूपत्वम्। सत्यत्वं तु स्फोटरूपवाक्यार्थस्यैव। मीमांसकमते तु सत्यामपि तात्पर्यवृत्तौ पदार्थानां वाक्यार्थे घट–तदुपादानकारणन्यायः स्वीकर्त्तव्यः। तथा च यथा घटे निष्पन्ने तदुपादानकारणस्य मृदादेर्न पृथगुपलम्भः, तथैव वाक्ये वाक्यार्थे च प्रतीते पदतदर्थानामप्रतीतिः, अन्यथा वाक्यार्थबुद्धेरेव दूरीभावात्। तेन वाक्यार्थबोधकाले पदार्थबोधो निवर्त्तत इति सिध्यति। न त्वेष वाच्यव्यङ्ग्ययोर्न्यायः, यतो व्यङ्ग्ये प्रतीयमाने वाच्यबोधो न दूरीभवति। वाच्यसहकृतस्यैव व्यङ्ग्यबोधस्य प्रकाशनात्। तेन पदार्थवाक्यार्थदृष्टान्तो विषमः।

घटप्रदीपदृष्टान्तस्तूचितः। यथा घटप्रतीतौ प्रदीपप्रकाशो न निवर्त्तते, तथैव व्यङ्ग्यप्रतीतौ वाच्यबोधः। यत्तु प्रथमोद्द्योते 'यथा पदार्थद्वारेण…' इत्याद्युक्तम्, तदुपायत्वसाम्यमात्रेण।

नन्वेवं युगपदर्थद्वययोगित्वं वाक्यस्य स्यात्, तद्भावे च तस्य वाक्यता विघटते, वाक्यताया दण्डायमानैकार्थबोधकत्वात्। नैष दोषः। तयोर्गुणप्रधानभावेन स्थितेर्योग-

पद्याभावात्। ध्वनौ व्यङ्ग्यस्य प्राधान्यम्, वाच्यस्य गौणत्वम्, गुणीभूतव्यङ्ग्ये तु वैपरीत्यमिति न युगपदर्थद्वयप्रतीतिः। तस्मात् काव्यस्य तात्पर्ये व्यङ्ग्यप्रतीतिपर्यन्ते सत्यपि, न व्यङ्ग्यस्य वाच्येन निरासः, तयोर्भेदस्य स्पष्टत्वात्।

किञ्च, तात्पर्यवादिमते अप्रधानव्यङ्ग्यस्य वाच्यत्वमेव न भवति, तत्र शब्दतात्पर्यस्याविश्रान्तेः। एवं सति गुणीभूतव्यङ्ग्यस्य व्यङ्ग्यत्वास्वीकारे वाच्यत्वाप्राप्तौ च का गतिः स्यादित्यपि विचारणीयं भवता।

अथ यदि गुणीभावावस्थायां व्यङ्ग्यस्य सत्ता स्वीक्रियते, तर्हि शब्दानां कश्चिद् विषयो व्यङ्ग्योऽस्तीति सिद्धे, किमिति प्रधाने तस्य स्वरूपमपह्नूयते। तदेवं सिद्धं वाचकत्वाद् भिन्नं व्यञ्जकत्वम्।

आश्रयभेदाच्च वाचकत्वाद् व्यञ्जकत्वस्य भिन्नत्वम्, वाचकत्वस्य शब्दमात्राश्रितत्वम्, व्यञ्जकत्वं तु शब्दाश्रितमर्थाश्रितं च। तदेतत्पूर्वं प्रतिपादितमेव।

न च लक्षणैव व्यञ्जना। लक्षणायाः साक्षादर्थनिष्ठत्वेन परम्परया च शब्दनिष्ठत्वेनोभयाश्रितत्वेऽपि व्यञ्जनाया लक्षणातः स्वरूपतो विषयतश्च भेदः। स्वरूपभेदस्तावदयम्—अमुख्यो व्यापारो लक्षणा, व्यञ्जना तु मुख्यो व्यापारः, त्रिविधेऽपि व्यङ्ग्ये वाच्यार्थबाधाभावेन मनागप्यमुख्यत्वस्यादर्शनात्। अन्योऽपि स्वरूपभेदः—अमुख्यं वाचकत्वमेव लक्षणेत्युच्यते, व्यञ्जकत्वं तु वाचकत्वात् सर्वथा भिन्नमेवेति प्रतिपादितमेव। अपरश्च—लक्षणायां वाच्यपदार्थस्य लक्ष्यपदार्थरूपेण परिणामो दृश्यते, यथा 'गङ्गायां घोषः' इत्यत्र 'गङ्गा'पदार्थस्य तटरूपेण परिणामः। व्यञ्जनायां तु वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यमर्थं प्रकाशयति, प्रदीपवत्, यथा 'लीलाकमलपत्राणि गणयामास पार्वती' इत्यत्र वाच्योऽनुभावः स्वं रूपमनिह्नुवान एव व्रीडां प्रकाशयति।

मुख्यार्थबाधाभावेऽपि तात्पर्यविषयार्थप्रकाशनाय लक्षणास्वीकारे तु लक्षणैव मुख्यः शब्दव्यापारः स्यात्। वाक्येषु प्रायस्तथाविधार्थप्रकाशनदर्शनात्। एवं च सर्वाभिमतं गुणवृत्तित्वं तस्या भज्येत।

ननु त्वत्पक्षेऽपि व्यञ्जनाया अमुख्यव्यापारत्वम्, मुख्यव्यापारत्वं वा? अमुख्यत्वे लक्षणात्वम्, मुख्यत्वे त्वभिधात्वं प्राप्तमिति चेत्। न। व्यञ्जनायाः मुख्यव्यापारत्वेऽपि प्रकरणादिविशिष्टशब्दव्यापारत्वं तस्याः, अभिधायास्तु केवलसङ्केतितशब्दव्यापारत्वमित्यस्ति भेदः।

लक्षणाव्यञ्जनयोर्विषयभेदोऽपि स्पष्ट एव, यतो व्यञ्जनाया ये रसवस्त्वलङ्कारा विषयास्तेषु रसप्रतीतेर्लक्षणाविषयत्वं कथमपि न सम्भवति । तथैव वस्त्वलङ्कारयोरपि । चारुत्वप्रतीतये स्वशब्दवाच्यत्वेन प्रतिपादयितुमिष्टस्य व्यङ्ग्यत्वात्, तत्र च शब्दस्य स्खलद्गतित्वाभावाच्च लक्षणाविषयत्वम्, संकेताभावाद्वाच्यव्यतिरिक्तत्वाच्च नाभिधाविषयत्वमिति सिद्धमस्यास्तदुभयतोऽपि भिन्नत्वम् । किञ्च, लाक्षणिकशब्दानां हि रूढिप्रोजनाभ्यामेव प्रयोगो दृश्यते । तत्र प्रयोजनप्रतीतिस्तु व्यञ्जकत्वेनैव, व्यञ्जकत्वाभावे प्रयोजनं न प्रतीयेतैव, तेन लक्षणातोऽत्यन्तविलक्षण एव व्यञ्जनाया विषयः ।

व्यञ्जकत्वं हि विवक्षितान्यपरवाच्ये ध्वनौ वाचकत्वाश्रयेण, अविवक्षितवाच्ये ध्वनौ तु लक्षणाश्रयेण व्यवतिष्ठते, तेनापि तस्य तदेकरूपता न शक्यते वक्तुम् । न तद् वाचकत्वरूपम्, क्वचित्तस्य लक्षणाश्रितत्वात् । न च लक्षणारूपम्, अन्यत्र वाचकत्वाश्रितत्वात् । न चोभयधर्मत्वेनैव तद्गतार्थयितुं शक्यम्, गीतध्वनीनां वाचकत्वलाक्षणिकत्वविलक्षणानामपि रसविषयकव्यञ्जकत्वदर्शनात् । न च शब्दधर्म एव व्यञ्जकत्वम्, चेष्टादावपि दर्शनात् ।

न चैवमभिधालक्षणादिष्वनन्तर्भावेऽपि तत्प्रकारविशेषोऽयमस्त्विति वाच्यम् । उक्तरीत्या प्रसिद्धप्रकारविलक्षणत्वेपि शब्दधर्मरूपाणां तेषां व्यापाराणां प्रकारत्वकल्पनापेक्षया शब्दप्रकारत्वेन ( पृथग्वृत्तित्वेन ) कल्पनमेवोचितम् । तेन न व्यञ्जना अभिधालक्षणारूपा, न च तद्विशेष इति सारः ।

तदेवं शाब्दे व्यवहारे त्रयः प्रकाराः—वाचकत्वं, गुणवृत्तिः, व्यञ्जकत्वं चेति । तत्र व्यञ्जकत्वे व्यङ्ग्यप्राधान्ये ध्वनिरिति सिद्धम् ।

अत्र शङ्कते । विवक्षितान्यपरवाच्ये ध्वनौ लक्षणया न निर्वाह इति सत्यम्, तत्रार्थान्तरस्य वाच्यवाचकप्रतीतिपूर्वकत्वेन वाच्यस्य अबाधितत्वात् । लक्षणायां तु 'अग्निर्माणवक' इत्यादौ अत्यन्ततिरस्कृतस्वार्थत्वेन वाच्यस्य अविवक्षितत्वम् ( बाधितत्वम् ), शब्दस्य विषयान्तरे अग्निसदृशत्वे आरोपितत्वात् । तेन विवक्षितान्यपरवाच्ये ( अभिधामूले ) ध्वनौ भवतु नाम व्यञ्जना, तत्र व्यङ्ग्यार्थस्य वाच्यवाचकयोश्च द्वयोरपि स्वरूपदर्शनात्, 'स्वरूपं प्रकाशयन्नेव परावभासको व्यञ्जकः' इति व्यञ्जकलक्षणस्य तत्र संगतत्वात् । अविवक्षितवाच्ये ( लक्षणमूले ) ध्वनौ तु वाच्यस्य

१–अग्निसदृशस्य चाग्निभिन्नत्वम्, 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमि'मिति सदृशस्वलक्षणात् ।

बाधितत्वेन द्वयोरपि भेदयोस्तत्स्वरूपानवभासात्, लक्षणायाः स्पष्टत्वात्, कुतो व्यञ्जना स्वीक्रियत इति चेत्।

लक्षणाया व्यञ्जनाश्रयभूतत्वेऽपि न व्यञ्जनारूपता, व्यञ्जकत्वशून्याया (रूढि-रूपाया) अपि लक्षणाया दर्शनात्। यत्र तु प्रयोजनवती लक्षणा 'चन्द्र एवास्या मुखम्' इत्यादौ, तत्र चारुत्वादिरूपस्य व्यङ्ग्यार्थस्य लक्षणामूलत्वेऽपि व्यञ्जनयैव बोधः, यथा वाच्यस्य व्यञ्जकत्वे। तस्माद् अविवक्षितवाच्ये ध्वनावपि व्यञ्जनाविशिष्टैव लक्षणा, न तु लक्षणारूपा व्यञ्जना।

किञ्च—वाचकत्वं (अभिधा) हि शब्दविशेषस्य नियतो धर्मः, संकेतज्ञान-कालादारभ्य तस्याविनाभावात्। व्यञ्जकत्वं तु अनियतम्, औपाधिकत्वात्। प्रकर-णादिसहकारेण हि तत्प्रतीतिः, अन्यथा तु न। न चानियतत्वे तत्स्वरूपविचारो व्यर्थ इति वाच्यम्, शब्दस्वरूपे तस्यानियततायामपि व्यङ्ग्यव्यञ्जने तस्य नियत-त्वात्। यथा धूमादेरनुमितिहेतुता नियताऽपि सत्यामनुमितीच्छायां प्रतीयते, अन्यथा तु तत्प्रतीतिरनियता, तथैव व्यञ्जकत्वस्य नियतेऽपि व्यङ्ग्यहेतुत्वे प्रकरणादि-सहकारे तत्प्रतीतिः, अन्यथा तु तत्प्रतीतिरनियता, अभिधा तु वाचकशब्देषु नियतैव। तेन स्वविषये सत्यपि व्यञ्जकत्वस्य नियतत्वे अभिधावच्छब्दे नियतत्वा-भावेनास्य नाभिधाभेदत्वं संभवति, तद्भेदत्वे तु तस्य शब्दस्वरूपे नियततैवापद्येत।

## मीमांसकानां व्यञ्जनास्वीकार आवश्यकः

शब्दानामयमौपाधिको धर्मः (व्यञ्जना) मीमांसकैरवश्यं स्वीकार्यः, तेषां मते शब्दार्थयोः संबन्धस्य नित्यत्वात्, पौरुषेयापौरुषेयवाक्ययोर्भेदवर्णनाच्च। व्यञ्ज-नाया अस्वीकारे हि शब्दार्थसंबन्धस्य नित्यत्वात् पौरुषेयापौरुषेयवाक्ययोरर्थप्रति-पादने न भवेत् कश्चिद् विशेषः। तत्स्वीकारे तु पौरुषेयवाक्यानां मिथ्यार्थतापि संभवति, शब्दार्थसंबन्धस्य नित्यत्वेऽपि तेषु व्यञ्जनारूपौपाधिकव्यापारसत्त्वात्, तस्य च पुरुषेच्छासमारोपितत्वात्। तेन तैर्व्यञ्जना स्वीकार्यैव।

ननु यथार्थार्थबोधकत्वस्य शब्दे नित्यं सत्त्वे तत्परित्यागमन्तरा कथं मिथ्यार्थ-प्रतिपादकत्वं तत्र संभवति, नहि वह्नेरुष्णत्वत्यागमन्तरा शैत्यं संभवतीति चेत्। नैष नियमः। अपरित्यक्तस्वभावा अपि पदार्थाः सामग्र्यन्तरेणौपाधिकव्यापार-मधिगत्य विरुद्धक्रियाकारिणो दृश्यन्ते, यथा चन्द्रादीनां विरहिसंतापकारित्वादि।

तस्मात् पौरुषेयवाक्यानां मिथ्यार्थत्वं समर्थयितुमिच्छता वाचकत्वातिरिक्तं किमप्यौपाधिकं रूपमवश्यं वाच्यम् । सा च व्यञ्जनैवेति सिद्धं नः समीहितम् ।

नन्वेवं शब्दमात्रस्य व्यञ्जकत्वात् सर्वत्र ध्वनिव्यवहारः प्रसक्त इति चेत् । सत्यम् । अस्ति सर्वत्र वाचकत्वमिव व्यञ्जकत्वमपि, किन्तु तद् अविनाभूम्, न तु विवक्षितम् । यत्र तु प्राधान्येन विवक्षितम्, तत्रैव ध्वनिव्यवहारः । तेन न दोषः ।

विवक्षितत्वं च शब्दार्थाभ्यामेव ( न तु चेष्टादिना ) प्रकाश्यमाने वक्तुरभिप्रायविशेषरूपे व्यङ्ग्य एव । अयमभिप्रायविशेषो न सर्वः शब्दार्थयोर्ध्वनित्वप्रयोजकः, तस्य व्यापकत्वात्, किन्तु तत्र यत् पूर्वोक्तरस-वस्तु-लङ्काररूपभेदत्रयरूपेण द्योत्यमानं, वाच्यवाचकौ तिरस्कृत्य प्राधान्येन प्रतीयमानं च तदेव ध्वनित्वप्रयोजकमिति नातिव्याप्तिर्न चाव्याप्तिः । तस्माद् वाक्यतत्त्वविदां मीमांसकानां मते व्यञ्जना व्यापारोऽनुकूल एव, न तु विरोधी । तेन सिद्धा तन्मते व्यञ्जना ।

## वैयाकरणैस्तु स्वीकृतैव व्यञ्जना

शब्दब्रह्मणो निरवयताविचारकाणां पदतत्त्वविदां वैयाकरणानां मतमाश्रित्यैव तु ध्वनिव्यवहारप्रवृत्तिः, अतस्तैः सह विरोधाविरोधचिन्ता वृथैव ।

## नैयायिकैरप्यखण्डनीया व्यञ्जना

शब्दार्थसम्बन्धानित्यत्ववादिनां प्रमाणविदां नैयायिकादीनामपि दीपालोकादिवदनुभवसिद्धमिदं शब्दानां व्यञ्जकत्वं खण्डयितुमनर्हम्, निर्विरोधत्वात् । वाचकत्वे हि तार्किकाणां 'नित्यं वा संकेतजन्यं वे'त्यादयो विप्रतिपत्तयः प्रवर्त्तन्ताम् । व्यञ्जकत्वे तु वाचकत्वानन्तर्भाविनि स्वीक्रियमाणे को विमतीनामवसरः ?

अलौकिकेऽर्थे तार्किकाणां भवतु नामाग्रहः, न तु लौकिके, न हि प्रत्यक्षं नीलं केनापि पीतमिति साधयितुं प्रयत्यते । तथैव वाचकशब्दानां, गीतध्वनीनां, चेष्टादीनां च यत् सर्वानुभवसिद्धं व्यञ्जकत्वं तत् केनापलप्येत । विदग्धपरिषत्सु विविधा उक्तयश्चेष्टादीनि चासंकेतितं रमणीयमर्थं सूचयन्ति स्वीक्रियन्ते, न तानि सुधिया तिरस्कर्त्तुं शक्यानि । तेन कथमेते युक्तिविदः प्रतिषेधेयुर्व्यञ्जनाम् ।

---

१. शब्देषु सर्वत्राभिप्रायस्य व्यञ्जनाबोध्यत्वेऽपि अभिप्रायविशिष्टोऽर्थ एव प्रवृत्त्युपयोगी, न त्वभिप्रायमात्रेण किञ्चित् कृत्यमिति भावः ।

एतत्तु शक्यं वक्तुम् । लिङ्गत्व( हेतुत्व )मेव व्यञ्जकत्वमिति, लिङ्गलिङ्गिभावश्च व्यङ्ग्यव्यञ्जकभाव इति, वक्त्रभिप्रायरूपं व्यङ्ग्यं चानुमेयरूपमिति । अत्रोच्यते । एवमपि किं नश्छिन्नम् । अभिधालक्षणाभ्यामतिरिक्तश्शब्दव्यापारः कश्चिदस्तीत्यस्माभिः साधितम् । तत्र व्यञ्जकत्वस्य लिङ्गत्वशब्देनोक्तावपि नास्माकं काचन क्षतिः । अभिधायतिरिक्तत्वे तु तस्य व्यापारस्य नास्त्येवावयोर्विवादः ।

किन्त्वेतेन सर्वत्र व्यञ्जकत्वं लिङ्गत्वमेव, व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति न मन्तव्यम् । 'वक्त्रभिप्रायप्रकाशने शब्दानां लिङ्गत्वमेव' इति यदस्माभिरुक्तं तस्य त्वयं भावः । द्विविधो हि विषयः शब्दानाम्—अनुमेयः, प्रतिपाद्यश्च । तत्राद्यो वक्तुः शब्दप्रयोगेच्छा, शब्देनार्थप्रतिपादनेच्छा चेत्युभयरूपः शब्दतोऽनुमेयस्तेन तत्र शब्दस्य लिङ्गत्वम् । द्वितीयस्तु वाच्यःयङ्ग्यार्थरूपस्तेन सह शब्दस्य प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, न तु लिङ्गलिङ्गित्वरूपः, तेनतस्य नानुमेयत्वम्, किन्त्वभिधा-व्यञ्जनाबोध्यत्वमेव । तस्मान्न व्यञ्जकत्वस्यानुमितया गतार्थत्वम् । यदि ह्यर्थप्रतिपादने शब्दानां लिङ्गता स्यात्तर्हि धूमाद्यनुमितवह्न्यादिवत् शब्दार्थे सम्यङ्मिथ्यात्वादिविवादा एव न प्रवर्त्तेरन् ।

व्यङ्ग्यश्चायमर्थो वाच्यार्थवत् शब्दस्य संबन्ध्येव । इयांस्तु केवलं भेदः—वाच्यार्थः साक्षात्संबन्धी, व्यङ्ग्यश्च वाच्यार्थाक्षिप्तत्वेन परम्परासंबन्धी । सोऽयं भेदोऽप्रयोजकः ।

तस्माद् वक्त्रिच्छारूपे व्यङ्ग्ये शब्दानां लिङ्गत्वम, वक्त्रिच्छाविषयभूते प्रतिपाद्ये तु शब्दानां प्रतिपादकत्वम् । एवंरूपे उभयविधे( इच्छारूपे, प्रतिपाद्यमानार्थरूपे च )ऽपि व्यङ्ग्ये पूर्वोक्तरीत्या ( संकेताद्यभावेन ) शब्दस्य वाचकत्वरूपः संबन्धो न संभवति । सम्बन्धान्तरं चेत्तर्हि व्यञ्जकत्वमेव ।

न च व्यञ्जकत्वं लिङ्गत्वमेव, व्यञ्जकानामालोकादीनां घटादिलिङ्गताया अदृष्टत्वात् । तस्मात् प्रतिपाद्येऽर्थे व्यङ्ग्यरूपे शब्दस्य न लिङ्गत्वम्, यत्र तु वक्त्रिच्छारूपे विषये शब्दस्य लिङ्गत्वं स न प्रतिपाद्यत्वेन प्रतीयते, किन्तु औपाधिकत्वेन । तेन व्यञ्जकत्वस्य लिङ्गत्वं नास्त्येव । प्रतिपाद्यस्य लिङ्गित्वे ( अनुमेयत्वे ) तु लौकिकैः क्रियमाणा विप्रतिपत्तयः ( सम्यङ्मिथ्यात्वादिरूपाः ) तत्र न प्रसज्येरन् इत्युक्तमेव । अनुमितेर्निश्चयात्मकतया संदेहप्रतिबन्धकत्वात् । तेन व्यङ्ग्यार्थस्य नानुमेयत्वम् ।

व्यङ्ग्यप्रतीत्यनन्तरं तत्सत्यत्वासत्यत्वनिर्णयाय क्रियमाणा प्रमाणान्तर ( अनु-

मिति ) गोचरता तु व्यङ्ग्यप्रतीतेर्व्यञ्जनारूपशब्दव्यापारविषयतां निवर्त्तयितुं न शक्नोति, यथा वाच्यस्य सम्यक्त्वप्रतीतये ( आप्तवाक्यत्वसाधनाय ) क्रियमाणाऽनुमितिस्तस्याभिधाविषयतां न निवर्त्तयति ।

काव्यविषये च वाच्यव्यङ्ग्यप्रतीतीनां सत्यत्वासत्यत्वनिरूपणमप्रयोजकमेव । तेन तत्र तु प्रमाणान्तर ( अनुमिति ) गोचरताविचार उपहासजनक एव ।

तस्माद् व्यङ्ग्यप्रतीतिः सर्वत्रानुमेयैवेति न शक्यते वक्तुम् । यत्तु वक्तुरिच्छाया अनुमेयरूपाया व्यञ्जकत्वं शब्दानामुक्तम्, तत्तु शब्दार्थयोर्नित्यसम्बन्धवादिनां मीमांसकानामपि व्यञ्जकत्वस्य शब्दव्यापारतास्वीकार आवश्यक इति प्रदर्शनार्थमेवोपन्यस्तम्, न तु तादृशलिङ्गत्वरूपव्यञ्जकत्वस्य ध्वनिव्यवहारप्रयोजकता ।

अस्माभिस्तु कदाचिल्लिङ्गत्वेन, कदाचिद् रूपान्तरेण च व्यञ्जकत्वं सर्ववादिभिः स्वीक्रियत एवेति दर्शनाय तत्तन्मतोपन्यासः कृतः ।

## उपसंहारः

यतश्च व्यञ्जकत्वमिदं क्वचिदभिप्रायादावनुमानेन, क्वचिद् दीपालोकादौ प्रत्यक्षेण, क्वचिद् गीतध्वन्यादौ कारणत्वेन, विवक्षितान्यपरेऽभिधया, अविवक्षितवाच्ये लक्षणया चानुगृह्यमाणं दृष्टम्, तेन तेभ्यः सर्वेभ्यो विलक्षणमस्य रूपं सिध्यतीत्यभिधालक्षणादिशब्दव्यापारेभ्यो व्यञ्जनाया अतिरिक्तत्वमतिरोहितम् ।

अथ सामग्र्यन्तरसहकारेणाभिधादिरेव व्यङ्ग्यमपि बोधयतीति व्यञ्जनाया अभिधादिविशेषत्ववादिनां मतेऽपि विप्रतिपत्तिनिरासाय, सहृदयव्युत्पत्तये वा ध्वनिनिरूपणमावश्यकमेव, सामान्यलक्षणनिरूपणेन उपयोगिविशेषलक्षणानां प्रतिक्षेपस्य कर्तुमशक्यत्वात्, अन्यथा सत्तामात्रलक्षणेन सकलसद्वस्तुलक्षणानां पौनरुक्त्यं स्यात् ।

तदेवं व्यवस्थापितेयं व्यञ्जना ।

विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः ।
ध्वनिसंज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम् ॥

## गुणीभूतव्यङ्ग्यः

प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत् ॥ ३४ ॥

व्यङ्ग्यस्य प्राधान्ये ध्वनिः, तस्य गुणीभावेन वाच्यचारुत्वप्रकर्षे तु गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः ।

तत्र वस्तुगुणीभावस्त्रिविधः—

१—वाच्यवाक्यार्थापेक्षया तिरस्कृतवाच्येभ्यः शब्देभ्यः प्रतीयमानस्य वस्तुरूपव्यङ्ग्यस्य गुणीभावो यथा—

*लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह संप्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥

इहोपमानोपमेययोस्तादात्म्यं व्यज्यमानं वाक्यार्थे गुणीभूतम् ।

२—अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य वाच्यचारुत्वापेक्षया गुणीभावो यथा—

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः ॥

इत्यादिसमासोक्तिप्रभृतिषु ।

३—व्यङ्ग्यस्य स्वयमुक्त्या प्रकाशने गुणीभावो यथा—

संकेतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥

इत्युदाहरणे कविना 'हसन्नेत्रार्पिताकूतम्' इत्यनेन व्यङ्ग्योऽर्थः प्रकटीकृतः ।

रसादीनां गुणीभावस्तु विवाहप्रवृत्तभृत्यानुयायिराजवत् । स च रसवदाद्यलङ्कारेषु दर्शित एव ।

व्यङ्ग्यालंकारगुणीभावो यथा दीपकादौ उपमादीनाम् ।

**प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः ।**
**ये च तेषु प्रकारोऽयमेव योज्यः सुमेधसा ॥ ३५ ॥**

---

* अत्र सिन्धुशब्देन परिपूर्णता, उत्पलशब्देन कटाक्षच्छटाः, शशिशब्देन वदनम्, द्विरदकुम्भतटीशब्देन स्तनयुगलम्, कदलिकाण्डशब्देनोरुयुगलम्, मृणालदण्डशब्देन दोर्युग्ममिति ध्वन्यते । तत्र चैषां शब्दानां स्वार्थस्य सर्वथानुपपत्तेस्तिरस्कृतवाच्यत्वम् । 'अपरैव हि केयम्' इति वाच्यांशे प्रतीयमानार्थस्य चारुत्वविधानाद् गुणीभूतत्वम् । ( लोचनसारः )

विवेकिसुखावहत्वाय प्रसन्नगम्भीरपदेषु सर्वेष्वेव काव्यबन्धेषु गुणीभूतव्यङ्ग्यो नाम प्रकारोऽयं योज्यः । यथा—

लच्छी दुहिदा, जामाउओ हरी, तस्स घरिणिआ गङ्गा ।
अमिअ-मिअङ्का अ सुआ अहो कुडुम्बं महोअहिणो ॥
( लक्ष्मीर्दुहिता जामाता हरिस्तस्य गृहिणी गङ्गा ।
अमृतमृगाङ्कौ च सुतौ अहो कुटुम्बं महोदधेः ॥ )

इह साभिप्रायपदानां व्यङ्ग्यं महोदधिपरिवारस्य सकलसौख्यसम्पादकत्वम् आश्चर्यवाचकेन 'अहो' शब्देन स्पष्टीकृतत्वाद् गुणीभूतम् ।

वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति ।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते ॥ ३६ ॥

सर्वोऽप्ययं वाच्यालङ्कारवर्गो व्यङ्ग्यांशानुगमे सति चमत्कारातिशयं बिभ्रल्लक्ष्येषु निरीक्ष्यते । तथाहि—दीपकसमासोक्त्यादिवदन्येऽप्यलङ्काराः प्रायेण व्यङ्ग्यालङ्कारान्तरस्य व्यङ्ग्यवस्तुनो वा संस्पर्शिनो दृश्यन्ते ।

तत्रातिशयोक्तिगर्भता सर्वत्र कर्तुं शक्या । किन्तु स्वविषयौचित्येन क्रियमाणैव सोत्कर्षमावहति । अनौचित्येन तु शोभा लीयेतैव । यथा—

अल्पं निर्मितमाकाशमनालोच्यैव वेधसा ।
इदमेवंविधं भावि भवत्याः स्तनजृम्भणम् ॥ इत्यादौ ।

अतएव भामहेनोक्तम् ।

सैषा सर्वैव वक्रोक्तिरनयाऽर्थो विभाव्यते ।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥

अस्यार्थः—कविप्रतिभावशायातया अतिशयोक्त्यैव चारुत्वातिशयाद्वियमेव सर्वालङ्काररूपेति ।

तस्याश्चालङ्कारसंकीर्णत्वं कदाचिद् वाच्यत्वेन, कदाचिद् व्यङ्ग्यत्वेन । व्यङ्ग्यत्वमपि कदाचित् प्राधान्येन कदाचिच्च गुणभावेनेति त्रिधा । तत्र वाच्यत्वे वाच्यालङ्कारता, व्यङ्ग्यप्राधान्ये ध्वनित्वम्, व्यङ्ग्यस्याप्राधान्ये तु गुणीभूतव्यङ्ग्यत्वम् ।

अन्येषामप्यलङ्काराणामयमेव प्रकारः, किन्तु तेषां कतिपयेऽलङ्कारा एव विषयः, अतिशयोक्तेस्तु सर्वालङ्कारविषयता संभवतीति विशेषः ।

सादृश्यमूलेषु रूपकोपमातुल्ययोगितानिदर्शनादिषु गम्यमानसाधारणधर्मद्वारा सादृश्यस्यैव चमत्कारितया, ते सर्वेऽपि गुणीभूतव्यङ्ग्यस्यैव विषयाः। समासोक्त्याक्षेपपर्यायोक्तादिषु तु व्यङ्ग्यांशाविनाभावेनैवालङ्कारताव्यवस्थानाद् गुणीभूतव्यङ्ग्यता निर्विवादैव।

तत्र गुणीभूतव्यङ्ग्यतायां केषांचिदलङ्काराणां नियमेनालङ्कारविशेषगर्भता, यथा—व्याजस्तुतेः प्रेयोऽलङ्कारगर्भता। केषां चित् सामान्यालङ्कारगर्भता, यथा—सन्देहादीनामुपमागर्भता (उपमाया अलङ्कारसामान्यता नानालङ्कारान्तर्वर्तित्वेन बोध्या)। केषां चित् परस्परगर्भताऽपि, यथा दीपकोपमयोः। तत्र दीपकस्योपमागर्भत्वं प्रसिद्धम्। उपमाऽपि कदाचिद्दीपकच्छायानुयायिनी, यथा—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च॥

इत्यादिमालोपमायां 'तया स पूतश्चविभूषितश्चे' त्यत्र दीपकच्छाया स्फुटैव।

तदेवं रूपकादयः सर्वेऽप्यलङ्कारा गुणीभूतव्यङ्ग्यभेदा एव, तेषु व्यङ्ग्यांशसंस्पर्शेनैव चारुत्वातिशयात, अन्यथा तु 'यथा गौस्तथा गवयः' इत्यादावपि उपमादिकं स्यात्। तेन गुणीभूतव्यङ्ग्यत्वमेव तेषां सामान्यलक्षणमित्यवसेयम्। एकैकस्य रूपविशेषस्तु न शक्यते निर्ज्ञातुम्, वाग्विकल्परूपाणामलङ्काराणामानन्त्यात्। न चालङ्कारान्तरगर्भेष्वेवालङ्कारेषु गुणीभूतव्यङ्ग्यतायाः सत्त्वात् सर्वेषामलङ्काराणां सामान्यलक्षणता तत्र कथं भवतीति शङ्क्यम्, रसवस्त्वादीनां व्यङ्ग्यानां गुणीभावेऽप्यस्त्येव गुणीभूतव्यङ्ग्यत्वम्। कथमपि व्यङ्ग्यसंस्पर्शाभावे च न चमत्कारः। तेन गुणीभूतव्यङ्ग्यत्वमलङ्काराणां सामान्यलक्षणमित्युक्तिर्निर्दोषैव।

एवं च प्रतीयमानार्थसंस्पर्शराहित्ये काव्यस्य सौभाग्यशालिता न संभवतीति तदिदं परं काव्यरहस्यमिति सूरिभिर्विभावनीयम्। तेन—

मुख्या महाकविगिरामलङ्कृतिभृतामपि।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्॥ ३७॥

प्रतीयमानच्छाययैव सुप्रसिद्धोऽप्यर्थः कामपि कमनीयतामावहति। यथा—

विस्रम्भोत्था मन्मथाज्ञाविधाने ये मुग्धाक्ष्याः केऽपि लीलाविशेषाः।
अक्षुण्णास्ते चेतसा केवलेन स्थित्वैकान्ते सन्ततं भावनीयाः॥

इत्यत्र 'केऽपी'तिपदेन वाच्यमस्पष्टमभिदधता प्रतीयमानमक्लिष्टमनन्तं वस्तव-र्पयता का नाम च्छाया नोपपादिता ?

अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते ।
सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥ ३८ ॥

काक्वाऽर्थप्रत्ययेऽपि गुणीभूतव्यङ्ग्यतैव, यथा—'स्वस्था भवन्ति ! मयि जीवति धार्तराष्ट्राः' इति भीमोक्तौ । यथा वा कयाचिन्नापितानुरक्तया कुलवध्वा दृष्टादिनयाया उपहस्यमानायाः काकुप्रधाना प्रत्युपहासगर्भोक्तिः—

आमं[1] असइओ ओरम पइव्वए ण तुए मलिणिअं सीलम् ।
किं उण जणस्स जाअ व्व चन्दिलं तं ण कामेमो ॥
( आम असत्यः, उपरम पतिव्रते, न त्वया मलिनितं शीलम् ।
किं पुनर्जनस्य जायेव नापितं तं न कामयामहे ॥ )

इत्यत्र 'भवामोऽसत्यः' इत्यभ्युपगमकाक्वा 'तथापि न त्वादृश्यो नीचगामिन्यः' इत्यादिव्यङ्ग्यस्य गुणीभूतत्वम् ।

काकुविशेषसहकृतया शब्दशक्त्यैवार्थविशेषप्रतिपादनेऽपि अर्थसामर्थ्याक्षिप्तत्वा-देवंविधार्थस्य व्यङ्ग्यत्वम् । व्यङ्ग्यविशिष्टवाच्यप्रतीत्या व्यङ्ग्यस्याप्राधान्यात्तु गुणी-भूतव्यङ्ग्यता ।

प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते ।
विधातव्या सहृदयैर्न तत्र ध्वनियोजना ॥ ३६ ॥

यत्र लक्ष्ये ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्कीर्णता, तत्र यस्य युक्तिसहायता तेन व्यपदेशः कार्यः, सर्वत्र ध्वनित्वसिद्धेराग्रहो न विधेयः । यथा—

पत्युः शिरश्चन्द्रकलामनेन स्पृशेतिसख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥

यथा च—

प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम् ॥

इत्यनयोः पद्ययोः 'निर्वचनं जघान' 'न किञ्चिदूचे' इत्युक्तिभ्यां 'लज्जा-' 'माना'

---

१. 'आमे'त्यभ्युपगमे । भवामः इत्यर्थः ।

देव्यंङ्ग्यस्य किञ्चिद् विषयीकृतत्वाद् गुणीभाव एव रमणीयः, न तु ध्वनित्वम्। तेन नेहानुरणनरूपध्वनिव्यपदेशः, पुनरुक्तिभङ्ग्या वाच्यस्यापि प्राधान्यात्। यत्रोक्तिं विना तात्पर्येणैव व्यङ्ग्योऽर्थः प्रकाशते तत्रैव व्यङ्ग्यप्राधान्यस्वीकारात्। यथा—'एवं वादिनि देवर्षौ' (पृ० २३) इति कुमारसंभवपद्ये।

प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्य-पर्यालोचनया पुनः॥ ४०॥

एतत्तु ज्ञेयम्। उक्तपद्यद्वये 'लज्जा'—'माना' दिव्यङ्ग्यापेक्षयैव गुणीभूतव्यङ्ग्यत्वम्, रसादिपर्यालोचनया तु ध्वनित्वमेव, तेषामगुणीभावात्। स एष न्यायः सर्वत्र गुणीभूतव्यङ्ग्ये बोध्यः। यथा—

*दुराराधा राधा सुभग यदनेनापि मृजत-
स्तवैतत्प्राणेशाजघनवसनेनाश्रु पतितम्।
कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे
क्रियात् कल्याणं वो हरिरनुनयेष्वेवमुदितः॥

इत्यत्र यद्यपि सर्वेषामपि पदानां प्रायः साभिप्रायत्वेन* व्यङ्ग्यप्रतीतिः तेन च वाच्यं भूषितं सदीर्ष्याविप्रलम्भाङ्गत्वमेति। किं तु व्यङ्ग्यस्य वाच्योपस्कारकत्वेन गुणीभूतत्वम्।

अतएव च 'न्यक्कारो ह्ययमेव' (पृ० ४४) इति पद्ये निर्दिष्टानां पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादनेन गौणत्वेऽपि वाक्यार्थीभूतरौद्ररसापेक्षयाऽस्य ध्वनित्वमुक्तम्। एवंविधेषु साभिप्रायेषु पदेषु अर्थान्तरसंक्रमितध्वनिभ्रमस्तु न कार्यः, विवक्षितवाच्यत्वात् तेषाम्। तेषु हि व्यङ्ग्यविशिष्टत्वं वाच्यस्य प्रतीयते, न तु व्यङ्ग्यरूपपरिणतत्वम्। तस्माद् वाक्यं तत्र ध्वनिः, पदानि तु गुणीभूतव्यङ्ग्यानि।

ध्वनिप्रभेदरूपाण्यपि पदानि ध्वनिव्यञ्जकानि भवन्ति यथात्रैव पद्ये 'रावणः' इति पदस्यार्थान्तरसंक्रमितवाच्यत्वम्, प्रधानरसव्यञ्जकत्वं च। तेन न केवलं गुणीभूतव्यङ्ग्यस्यैव, किन्तु ध्वनेरपि ध्वन्यन्तरव्यञ्जकत्वं भवतीति बोध्यम्।

यत्र तु वाक्ये रसादितात्पर्यं नास्ति तत्र गुणीभूतव्यङ्ग्यतैव, यथा—

राजानमपि सेवन्ते विषमप्युपयुञ्जते।
रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः॥

---

* **दुराराधा**—अकारणकुपिताऽपि पादपतिते त्वयि न प्रसीदति, **सुभग**—स्वसंभोगभूषणादिहीनोऽपि यः प्रियया क्षणमपि मोक्तुं न पार्यसे इत्यादिव्यङ्ग्यं स्वयमूह्यम्। विस्तरभयान्न लिख्यते।

अत्र क्लेशातिशयसाध्यत्वरूपव्यङ्ग्यविशिष्टवाच्यानामेव प्राधान्यात्, कुशलता-रूपवाच्यसिद्ध्यङ्गत्वाच्च गुणीभूतव्यङ्ग्यतैव वाक्यार्थः।

तदेवं वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्यविवेके परः प्रयत्नः कार्यः, अन्यथा प्रसिद्धालङ्कारनिर्णयेऽपि व्यामोहः स्यात्। यथा—

लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः
स्वच्छन्दं चरतो जनस्य हृदये चिन्तानलो दीपितः।
एषाऽपि स्वयमेव तुल्यरमणाभावाद् वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता॥

इत्यत्र 'निन्दया तन्वीस्तुतेरभिव्यक्तिरिति व्याजस्तुतिरियम्' इति व्याख्यातं केनचित्। तन्न सुविमृष्टम्। यतो नैषा रागिण उक्तिः, तस्य 'तुल्यरमणाभावाद्वराकी हता' इत्येवमुक्तेरनुपपत्तेः, नापि विरक्तस्य तस्य विषयवितृष्णत्वात्। मुक्तकत्वाच्चास्य श्लोकस्य न प्रकरणार्थानुगतत्वम्। तस्मादप्रस्तुतप्रशंसेयम्। यतोऽत्र वाच्येन गुणीभूतात्मना 'स्वस्मादन्यं विशेषज्ञमपश्यतो गुणगर्वितस्य परिदेवितमिद'मिति प्रकाश्यते। बौद्धभिक्षोर्धर्मकीर्तेरयं श्लोक इति प्रसिद्धिः। संभाव्यते च तस्यैव। यतः—

अनध्यवसितावगाहनमनल्पधीशक्तिनाऽ-
प्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि।
मतं मम जगत्यलब्धसदृशप्रतिग्राहकम्
प्रयास्यति पयोनिधेः पय इव स्वदेहे जराम्॥

अनेनापि श्लोकेन स एवाभिप्रायस्तेन प्रकाशितः।

साम्यमूलाप्रस्तुतप्रशंसायां वाच्यस्य विवक्षितत्वम्, अविवक्षितत्वम्, विवक्षिताविवक्षितत्वमिति त्रयो भेदाः। विवक्षितत्वं यथा—

परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः।
न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः॥

अथवा:—

अमी ये दृश्यन्ते ननु सुभगरूपाः, सफलता
भवत्येषां यस्य क्षणमुपगतानां विषयताम्।

निरालोके लोके कथमिदमहो चक्षुरधुना
समं जातं सर्वं सममथवाऽन्यैरवयवैः ॥

इत्यनयोः पद्ययो-रिक्षुचक्षुषी यद्यपि विवक्षिते ( संभवतः ), तथापि न प्रस्तुते, महागुणजनस्वरूपवर्णन एव श्लोकयोस्तात्पर्यात् ।

अविवक्षितत्वं यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि, साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनस्सर्वात्मना सेवते
न च्छायाऽपि परोपकारकरिणी मार्गस्थितस्यापि मे ॥

इत्यत्र वृक्षेण सहोक्तिप्रत्युक्त्योरसंभवेन वाच्यस्याविवक्षितत्वम् , तेन च कस्यचन निर्धनस्य मनस्विनः परिदेवितं व्यज्यते ।

विवक्षिताविवक्षितत्वं यथा—

उप्पहजाआए असोहिणीए फलकुसुमपत्तरहिआए ।
बेरीए वइं देन्तो पामर हो ओहसिज्जिहसि ॥
( उत्पथजाताया अशोभनायाः फलकुसुमपत्ररहितायाः ।
बदर्याः वृतिं ददत् पामर भोः उपहसिष्यसे ॥ )

अत्र हि वाच्यार्थो नात्यन्तं संभवी न चासंभवी । अत्र अप्रस्तुतांशे कामप्यकुलीनां कुरूपां वन्ध्यां रक्षन्तं प्रत्युक्तिः ।

तस्माद् वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्ये यत्नतो निरूपणीये ।

## चित्रकाव्यम्

प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
काव्ये उभे, ततोऽन्यद् यत्तच्चित्रमभिधीयते ।। ४१ ।।
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ।। ४२ ।।

व्यङ्ग्यस्य प्राधान्ये ध्वनिः, गुणीभावे गुणीभूतव्यङ्ग्यम् । व्यङ्ग्यार्थप्रकाशनशक्तिशून्यं तु चित्रसदृशत्वाच्चित्रम् । न तन्मुख्यं काव्यम् , किन्तु काव्यानुकारः ।

---

१ निर्विवेके इत्यप्यर्थः ।

तद् द्विविधम् । १–शब्दचित्रम्–यथा दुष्करयमकादि, २–वाच्यचित्रम्–यथा वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षादि ।

किमिदं चित्रं नाम ?

ननु वस्त्वलङ्काररूपव्यङ्ग्यरहितत्वं काव्यस्य संभवति, तेन भवतु नाम तादृशस्य चित्रत्वम् । रसादिशून्यं तु काव्यं न संभवत्येव । तथाहि—वस्तुवर्णनरहितं काव्यं नोपपद्यते । वस्तुवर्णनं च तादृशं न संभवति यत् कमपि चित्तवृत्तिविशेषं नोत्पादयेत् , अन्यथा तस्य कविकर्मविषयतैव न स्यात् । चित्तवृत्तिविशेषाश्च रसादयः, वस्तुमात्रस्य किञ्चिच्चित्तवृत्त्यालम्बनोद्दीपनतासंभवेन रसाङ्गताया अनिवार्यत्वात् । सत्यम् । रसादिप्रतिपत्तिरहितं काव्यं नास्त्येव, किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनिबध्नाति, तदा तद्विवक्षापेक्षया रसादिशून्यत्वं काव्यस्य कल्प्यते । वाच्यसामर्थ्येन तत्र प्रतीयमानस्यापि रसादेः प्रतीतिर्दुर्बलतामापद्यत इति चित्रस्य नीरसत्वमुच्यते । इदमत्र विवक्षितम्—

रसभावादिविषय–विवक्षाविरहे सति ।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः ॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा ।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः ॥

रसादितात्पर्यरहितकाव्यदर्शनाच्चित्रमिति भेदोऽस्माभिः कल्पितः । आधुनिकैस्तु ध्वनिनिरूपण एव यतनीयम् , यतः परिपाकवतां कवीनां रसादितात्पर्यविरहे व्यापार एव न शोभते । रसादितात्पर्ये सति तु अचेतना अपि हि भावा न सन्त्येव ते ये रसाङ्गतां न यान्ति । अत एवोच्यते—

भावानचेतनानपि चेतनवच्चेतनानचेतनवत् ।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया ॥

तस्मान्नास्त्येव तद्वस्तु यत्कवेरभिमतरसाङ्गतां न धत्ते, न वा रसाङ्गतयोपनिबध्यमानं चारुत्वातिशयं न पुष्णाति । सर्वमेतन्महाकवीनां काव्येषु दृश्यते । स्थिते चैवं सर्वोऽपि काव्यप्रकारो ध्वनिरेव भवति । गुणीभूतव्यङ्ग्यस्यापि रसाद्यपेक्षया ध्वनिरूपता प्राक् प्रतिपादितैव । नृपदेवतास्तुतिषु लौकिकगाथास्वपि च व्यङ्ग्यविशिष्टवाच्यस्यैव चमत्कारजनकत्वाद् गुणीभूतव्यङ्ग्यत्वेऽपि ध्वनिनिष्यन्दरूपतैव ।

तदेवं चित्रस्यातिस्वल्पो विषयः । स चाभ्यासार्थिनां काव्येषु भवतु, प्राप्तपरिणतीनां तु ध्वनिरेव काव्यमिति ।

## ध्वनेः प्रभेदाः

सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ ४३ ॥

ध्वनेर्लक्ष्येषु सङ्कर-संसृष्टिभ्यां बहुप्रभेदता दृश्यते । तथा हि ( १ ) स्वप्रभेदसंकीर्णः, ( २ ) स्वप्रभेदसंसृष्टः, ( ३ ) गुणीभूतव्यङ्ग्यसंकीर्णः, ( ४ ) गुणीभूतव्यङ्ग्यसंसृष्टः, ( ५ ) वाच्यालङ्कारान्तरसंकीर्णः, ( ६ ) वाच्यालङ्कारान्तरसंसृष्टः, ( ७ ) संसृष्टालङ्कारसंकीर्णः, ( ८ ) संसृष्टालङ्कारसंसृष्टश्चेति बहुधा प्रकाशते ।

( १ ) तत्र स्वप्रभेदसंकीर्णत्वमनुग्राह्यानुग्राहकभावेन यथा 'एवं वादिनि देवर्षौ' ( पृ. २३ ) इत्यादौ । अत्र हि अर्थशक्त्युद्भवेन संलक्ष्यक्रमेण 'लज्जा' लक्षणध्वनिना अलक्ष्यक्रमोऽभिलाषरूपविप्रलम्भध्वनिरनुगृह्यमाणः प्रतीयते ।

स्वप्रभेदसंकीर्णत्वं संदेहसंकरेण यथा—

खणपाहुणिआ देअर जाआए किं पि दे भणिदा ।
रुअइ पडोहरवलहीघरम्मि अणुणिज्जउ वराई ॥
( क्षणप्राघुणिका देवर जायया किमपि ते भणिता ।
रोदिति शून्यवलभीगृहे अनुनीयतां वराकी ॥ )

इत्यादौ ।

अत्र हि 'अनुनीयताम्' इत्यस्योपभोगो व्यङ्ग्यः । स च तात्पर्यानुपपत्त्याऽनुनयस्य बाधितत्वादर्थान्तरसंक्रमितरूपोऽविवक्षितवाच्यो वा अनुरणनन्यायेन विवक्षितान्यपरवाच्य एव वेत्येककोटिनिर्धारकप्रमाणाभावादनयोः संदेहरूपः सङ्करः ।

अलक्ष्यक्रमध्वनिप्रभेदयोरेकव्यञ्जकानुप्रवेशरूपसङ्करो यथा—'स्निग्धश्यामल' ( पृ. ११ ) इत्यत्र विप्रलम्भशृङ्गारस्य तद्व्यभिचारिणश्च शोकावेगात्मनश्चर्वणीयत्वात् । सङ्करोऽयमलक्ष्यक्रमेषु बाहुल्येन दृश्यते ।

( २ ) ध्वनिप्रभेदयोः संसृष्टिर्यथा पूर्वोक्ते 'स्निग्धश्यामल' (११) इत्यत्रैव । अत्र हि रामपदव्यङ्ग्यस्यार्थान्तरसंक्रमितरूपस्य, 'लिप्ता'दिपदव्यङ्ग्यस्य चात्यन्ततिरस्कृतवाच्यरूपस्य संसृष्टिः[1] ।

---

१. दुग्धजलवन्मिश्रणे संकरः, तिलतण्डुलवन्मिश्रणे तु संसृष्टिरिति भेदः ।

( ३ ) गुणीभूतव्यङ्ग्यसंकीर्णः–यथा 'न्यक्कारो ह्ययमेव०' (पृ. ४४) इत्यत्र,

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी,
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं,
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥

इत्यत्र चोदाहरणद्वयेऽपि वाक्यार्थीभूतस्य रौद्ररसस्य साभिप्रायविशेषणोपस्थापितैर्गुणीभूतव्यङ्ग्यैः सह अनुग्राह्यानुग्राहकभावरूपसंकरः ।

अत्रेदमवधेयम्–गुणीभूतव्यङ्ग्यस्य पदार्थाश्रयत्वे, ध्वनेश्च वाक्यार्थाश्रयत्वे संकीर्णतायां न विरोधः, यथा परस्परं ध्वनिभेदानाम् । यतो हि एकस्मिन् व्यङ्ग्ये प्रधानत्वं गुणीभूतत्वं च विरुध्येते, व्यङ्ग्यभेदे तु न विरोधः ।

संकरसंसृष्टिव्यवहारो व्यङ्ग्यव्यञ्जकभावे न भवतीति न शङ्क्यम्, वाच्यानामिव व्यङ्ग्यानामपि तत्सत्त्वे विरोधाभावात् ।

( ४ ) गुणीभूतव्यङ्ग्यसंसृष्टत्वं तत्र भवति यत्र कानिचित् पदान्यविवक्षितवाच्यध्वनिव्यञ्जकानि, अपराणि तु गुणीभूतव्यङ्ग्यानि, यथा 'तेषां गोपवधू' ( पृ. १४ ) इत्यादौ । अत्र हि 'विलाससुहृदाम्' 'राधारहःसाक्षिणाम्' इत्येते पदे 'लतावेश्मनां' विशेषणे अचेतनेषु तेषु सौहार्दसाक्ष्ययोर्बाधादत्यन्ततिरस्कृतवाच्यध्वनिरूपे । तयोः 'ते' इति 'जाने' इति च गुणीभूतव्यङ्ग्यपदाभ्यां संसृष्टिः ।

( ५ ) वाच्यालङ्कारसंकीर्णत्वं तु रसव्यञ्जके, रसवदाद्यलङ्कारयुक्ते च काव्ये सर्वत्रैव ।

अन्यध्वनीनामपि वाच्यालङ्कारसंकरो दृश्यते । यथा—

या व्यापारवती रसान् रसयितुं काचित्कवीनां नवा
दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती ।
ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं
श्रान्ता नैव च लब्धमब्धिशयन त्वद्भक्तितुल्यं सुखम् ॥

इत्यत्र 'निर्वर्णन'पदस्य चाक्षुषज्ञानरूपस्य कविदृष्ट्या, विद्वद्दृष्ट्या च प्रतिभानरूपस्य विरोधः, असम्भवित्वात्, बोधरूपार्थपरिणतत्वात्तु तन्निवृत्तिरिति विरोधाभासोऽलङ्कारः, तस्य च निर्वर्णनपदेन व्यज्यमानेन 'सकलप्रमाणपरिनिश्चितदृष्टादृष्टविषयविशेषजं यत् सुखं, यदपि वा लोकोत्तरं रसचर्वणात्मकम्, तत उभयतोऽपि परमेश्वरविश्रान्त्यानन्दः प्रकृष्यते' इति ध्वनिना सह संकरः ।

( ६ ) वाच्यालङ्कारसंसृष्टत्वं तत्र भवति यत्र हि कानिचित् पदानि वाच्यालङ्कारवन्ति, कानिचिच्च ध्वनिप्रभेदयुक्तानि । यथा—

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥

इत्यत्र 'मैत्री'पदं परस्परानुकूल्यलाभे लाक्षणिकतया सौरभोत्कर्षव्यञ्जकमित्यविवक्षितवाच्यो ध्वनिः। स च 'दीर्घीकुर्वन्नि'ति गम्योत्प्रेक्षया, द्वितीयचरणोक्तया स्वभावोक्त्या, वाते चाटुकारयितृत्वारोपाद् रूपकेण, 'प्रियतम इव' इत्युपमया च संसृष्टः । पदान्तरेष्वलङ्कारान्तराण्यपि ।

( ७ ) संसृष्टालङ्कारसंकीर्णः—

दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे ।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि ॥

अत्र हि वाक्यार्थीभूतस्य दयावीरस्य शान्तस्य वा रसध्वनेः नायिकावृत्तान्तारोपरूपसमासोक्तिसंसृष्टेन मुनित्व–मदनाविष्टत्वयोर्विरोधाद् विरोधालङ्कारेण संकीर्णत्वम् ।

( ८ ) संसृष्टालङ्कारसंसृष्टः । यथा—

अहिणअ-पओअ-रसिएसु पहिअ-सामाइएसु दिअहेसु ।
सोहइ पसारियगिआणं णच्चिअं मोरवन्दाणम् ॥
( अभिनव[1]पयोदरसितेषु पथिकश्यामा[2]यितेषु दिवसेषु ।
शोभते प्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम् ॥

अथ च—

अभिनयप्रयोग[3]रसिकेषु पथिकसामाजिकेषु दिवसेषु ।
शोभते प्रसारितगीतानां नृत्यं मयूरवृन्दानाम् ॥ )

अत्र हि 'सामाइएसु' इति पदस्य 'श्यामायितेषु', 'सामाजिकेषु' इति च द्विविधा

---

१. अभिनवं पयोदरसितं मेघगर्जितं येषु। २. पथिकान् प्रति श्यामायितेषु मोहजनकत्वाद् रात्रिरूपतामाचरितवत्सु । ३. पथिकरूपेषु सामाजिकेषु अभिनयप्रयोगरसिकेषु सत्सु ।

छाया । पूर्वस्मिन्नर्थे लुप्तोपमा, परस्मिन् रूपकम् इति ( प्राचां मतेन ) संसृष्टाभ्यां ताभ्यां द्वितीयच्छायानिर्दिष्टस्य शब्दशक्तिमूलकध्वनेः संसृष्टत्वम् ।

## उपसंहारः

एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते ।
संख्यातुं दिङ्मात्रं तेषामिदमुक्तमस्माभिः ॥ ४४ ॥
इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः ।
सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः ॥ ४५ ॥
अस्फुटस्फुरितं काव्यतत्त्वमेतद्यथोदितम् ॥
अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः ॥ ४६ ॥
शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः ।
वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे ॥ ४७ ॥

रीतिलक्षणविधायिनां वामनादीनां ध्वनिरूपकाव्यतत्त्वं मनाक् स्फुरितमासीत् तदत्र स्फुटतया संदर्शितमिति भावः ।

उपनागरिकादीनां शब्दरीतीनां कैशिक्यादीनामर्थरीतीनां च रीतित्वमपि ध्वनिबोधेनैव यथार्थं भवति, अन्यथा तु वृत्तीनां फलादर्शनादश्रद्धेयत्वं स्यात्, नानुभवसिद्धत्वम् ।

यत्तु केन चित् रत्नानां जात्यत्वमिव कैश्चिदेव ज्ञातृभिर्ज्ञायमानं शब्दानामर्थानां चानाख्येयं चारुत्वं यत्र भासते तत्र ध्वनिव्यवहार इत्युक्तम्, तदनवधेयमेव । तथाहि—कस्य विशेषस्य तत्रानाख्येयत्वम्? शब्दानां स्वरूपाश्रयस्य? न, तस्याक्लिष्टत्वादिभिर्निरूपणात् । तद्वाचकत्वाश्रयस्य? न, प्रसादो, व्यञ्जकत्वं चेति तन्निरूपणात् । अर्थानां विशेषस्य? न, तस्य स्फुटत्वेनावभासनमित्येकः, व्यङ्ग्यपरत्वं ( ध्वनिरूपत्वं ), व्यङ्ग्यांशविशिष्टत्वं ( गुणीभूतव्यङ्ग्यरूपत्वं ) चेति द्वितीयः, एतौ च विशेषौ व्याख्यातुं शक्येते, बहुधा व्याख्यातौ चास्माभिः । तद्व्यतिरिक्तस्य कस्यचिदनाख्येयविशेषस्य कल्पना त्वविवेकमूलैव । सर्वस्यापि पदार्थज्ञानस्य शब्दार्थगोचरत्वेनानाख्येयताया असंभवात्, अनाख्येयस्याप्यनाख्येयशब्देनाभिधानात् ।

यत्तु रत्नानामिव सामान्यशब्दमात्रवेद्यत्वं काव्यचारुत्वस्यानाख्येयत्वं क्वचिदुच्यते, तद् रत्नानां संभवति, तेषां सामान्यसंभावनयैव मूल्यकल्पनात्, न तु काव्यविशेषाणाम्, लक्षणकारैर्व्याकृतत्वात् । तेन विषमो दृष्टान्तः ।

यदि तु 'रत्नानां काव्यानां च विरला एव वेत्तारः' इत्युच्यते, तर्हि नास्माकं विप्रतिपत्तिः। वैकटिका एव रत्नतत्त्वविदः, सहृदया एव च काव्यरसज्ञा इत्यस्माभिरपि स्वीक्रियत एव।

यत्तु सर्वलक्षणविषये बौद्धानामनिर्देश्यत्वं प्रसिद्धम्, तन्निरासो ग्रन्थान्तरस्य विषयः। तस्यात्र सहृदयवैमनस्यदायित्वात्। अथवा बौद्धमतेन यथा क्षणिकानामपि प्रत्यक्षादिज्ञानानां लक्षणं क्रियत एव, तथैव तन्मतेऽस्माकमपि ध्वनिलक्षणं भवतु। तस्माद् ध्वनेरस्मदुक्तमेव लक्षणं साधीयः, अन्यथा तदघटनात्, न त्वनाख्येयांशाभासित्वमिति।

तदिदमुक्तम्—

अनाख्येयांशाभासित्वं निर्वाच्यार्थतया ध्वनेः।
न लक्षणं, लक्षणं तु साधीयोऽस्य यथोदितम्॥

॥ इति तृतीय उद्द्योतः॥



## चतुर्थ उद्द्योतः

सम्प्रति ध्वनिव्युत्पादने विप्रतिपत्तिनिरासातिरिक्तं प्रयोजनान्तरम् ( सत्काव्यकरण-सत्काव्यबोधरूपम्, अथवा पूर्वोक्तयोस्तयोः प्रयोजनयोरन्तरं विशेषः केन विशेषेण सत्काव्यकरणमस्य प्रयोजनं केन च विशेषेण सत्काव्यबोधोऽस्य प्रयोजनमिति ) उच्यते—

तत्र सत्काव्यकरणे कथमस्योपयोग इति पूर्वं प्रतिपाद्यते—

ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः।
अनेनानन्त्यमायाति कवीनां प्रतिभागुणः॥ १॥

य एष ध्वनेर्गुणीभूतव्यङ्ग्यस्य च मार्गो दर्शितः, तस्य फलान्तरं कवेः शब्दार्थप्रतिभानानन्त्यम्। यतो हि—

अतो ह्यन्यतमेनापि प्रकारेण विभूषिता।
वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि॥ २॥

उक्तेषु ध्वनानिप्रकारेष्वेकेनाऽपि प्रकारेण विभूषिता वाणी वाल्मीक्यादिपुरा-

तनकविनिबद्धमर्थं स्पृशन्त्यपि नवत्वमायाति। तथाहि—अत्यन्ततिरस्कृतवाच्यस्य ध्वनेराश्रयणेन नवत्वं यथा—

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोर्मिसरसः।
गतानामारम्भः किसलयितलीलापरिमलः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः॥

इत्यत्र—

सविभ्रमस्मितोद्भेदा लोलाक्ष्यः प्रस्खलद्गिरः।
नितम्बालसगामिन्यः कामिन्यः कस्य न प्रियाः॥

इत्यादिप्राचीनपद्यसत्त्वेऽपि मुग्धादिशब्दैः स्वाभाविकसौन्दर्यादिव्यञ्जकैरपूर्वत्वं प्रतिभासते।

अर्थान्तरसंक्रमितवाच्यध्वनेराश्रयणेनापूर्वत्वं यथा—

यः प्रथमः प्रथमः स तु तथाहि हतहस्तिबहलपललाशी।
श्वापदगणेषु सिंहः सिंहः केनाधरीक्रियते॥

इत्यत्र—

स्वतेजःक्रीतमहिमा केनान्येनातिशय्यते।
महद्भिरपि मातङ्गैः सिंहः किमभिभूयते॥

इतिपद्यसत्त्वेऽपि द्वितीयः प्रथमशब्दोऽनपाकरणीयप्रधानत्वम्, द्वितीयः सिंह-शब्दश्च वीरत्वादिकं व्यञ्जयतीति नवत्वम्।

असंलक्ष्यक्रमव्यङ्ग्यस्य प्रकारान्तरसमाश्रयणेन नवत्वं यथा—

निद्राकैतविनः प्रियस्य वदने विन्यस्य वक्त्रं वधू-
र्बोधत्रासनिरुद्धचुम्बनरसाऽप्याभोगलोलं स्थिता।
वैलक्ष्याद् विमुखीभवेदिति पुनस्तस्याप्यनारम्भिणः
साकाङ्क्षप्रतिपत्ति नाम हृदयं यातं तु पारं रतेः॥

इत्यत्र—

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता॥

इति अमरुकपद्योक्तार्थस्य। अमरुकपद्ये 'चुम्बन' क्रियानिष्पत्तिरुक्ता, नवीनपद्ये तु कविना तयोः साकाङ्क्षत्वमेव निरूपयता रतेरखण्डत्वं साधितम्।

अनया दिशाऽसंख्यैः कविभिः सहस्रधा क्षुण्णोऽपि काव्यमार्गोऽभिनवतामापन्नोऽनन्ततां याति ।

युक्त्याऽनयाऽनुसर्तव्यो रसादिर्बहुविस्तरः ।
मिथोऽप्यनन्ततां प्राप्तः काव्यमार्गो यदाश्रयात् ॥ ३ ॥

यद्यपि रसभावादयः सन्ति परिगणिता एव, तथापि तद्विभावानुभावव्यभिचारिणामनन्तविधत्वात्तत्समाश्रयणेन तेषामप्यानन्त्यं सम्पद्यते । तादृशप्रभेदापेक्षया निबध्यमानस्य प्रतिदिनमर्यवेद्यमाणस्यैव जगतो वृत्तं विचित्रतां चमत्कारितां चायाति । तदेतत् 'भावानचेतनानपि' ( ७५ ) इत्यादिना पूर्वं प्रतिपादितमेव । गाथाऽप्यत्र दृश्यते—

अतहट्ठिए वि तहसण्ठिए व्व हिअअम्मि जा णिवेसइ ।
अत्थविसेसे सा जअइ विकड–कइ–गोअरा वाणी ॥
( अतथास्थितानपि तथासंस्थितानिव हृदये या निवेशयति ।
अर्थविशेषान् सा जयति विकटकविगोचरा वाणी ॥ )

अत एवोच्यते—

दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात् ।
सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः ॥ ४ ॥

शब्दशक्तिमूलध्वनियोगेनाभिनवत्वं यथा—

शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।
यदलङ्घितमर्यादां चलन्तीं बिभ्रते भुवम् ॥

इत्यादिषु सत्स्वपि 'धरणीधारणायाधुना त्वं शेषः' (पृ. ३३) इत्यादावभिनवत्वम् ।
अर्थशक्तिमूलध्वनियोगेनाभिनवत्वं यथा—

कृते वरकथालापे कुमार्यः पुलकोद्गमैः ।
सूचयन्ति स्पृहामन्तर्लज्जयाऽवनताननाः ॥

इत्युक्तार्थ एव—

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ( पृ. २३ )

इत्यत्र ।

अर्थशक्तिमूलव्यङ्ग्यस्य कविप्रौढोक्तिसिद्धत्वेन नवत्वं यथा—

सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स शरे॥ ( पृ. २४ )
( सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्।
अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान्॥ )

इत्यत्र—

सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीयाः।
रागवतामुत्कलिकाः सहैव सहकारकलिकाभिः॥

इत्यादिषु सत्स्वपि।

तस्यैव कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेनाभिनवत्वं यथा—

वाणिअअ हत्थिदन्ता कुत्तो अह्माण वाघकित्तीअ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सुह्णा॥ ( पृ. २४ )
( वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा॥ )

इत्यादि गाथार्थस्य—

करिणीवेहव्वअरो मह पुत्तो एक्ककाण्डविणिवाई।
हअसोह्वाए तह कओ जह कण्डकरण्डअं वहइ॥
( करिणीवैधव्यकरो मम पुत्र एककाण्डविनिपाती।
हतस्नुषया तथा कृतो यथा काण्डकरण्डकं वहति॥

इत्याद्यर्थेषु सत्स्वप्यगतार्थतैव। 'लुलितालकमुखी' इति स्नुषाविशेषणेन 'कुत' इति काका च वस्तुनोऽपूर्वत्वसंपादनात्।

एवमेव व्यञ्जकभेदाश्रयेणापि काव्यार्थानां नवत्वं संभवति। विस्तरभयात्तु नोदाहृतम्, सहृदयैरूह्यम्।

अत्रेदं सारम्—

व्यङ्ग्यव्यञ्जकभावेऽस्मिन् विविधे संभवत्यपि।
रसादिमय एकस्मिन् कविः स्यादवधानवान्॥ ५॥

रसभावतदाभासरूपे हि व्यङ्ग्ये, तद्व्यञ्जकेषु च यथामति निर्दिष्टेषु वर्ण-पद-वाक्य-रचना-प्रबन्धेष्ववहितमनसः कवेः सर्वमपूर्वं संपद्यते। यथा रामायणे महाभारते च संग्रामादयः पुनः पुनरभिहिता अपि नवनवाः प्रकाशन्ते।

अङ्गी रसः पुनरेक एव विधेयः, तथासति चमत्कारातिशयः संपद्यते। यथा रामायणे करुणः स्वयमादिकविना 'शोकः श्लोकत्वमागतः' इत्यासूत्रितः, सीतात्यन्तवियोगपर्यन्तं च काव्यं रचयता निर्व्यूढः।

## महाभारते को रसः कश्च पुरुषार्थः ?

एवमेव शास्त्रकाव्योभयचमत्कारवति महाभारतेऽपि वृष्णिपाण्डवानां विरसमवसानमन्ते निबध्नता महामुनिना निर्वेदस्थायिभावः शान्तो रसः, मोक्षलक्षणश्च पुरुषार्थः प्राधान्येन तात्पर्यविषय इति सूचितम्। एतद् व्याख्यातृभिरंशतः प्रकटीकृतं स्वयं च वेदव्यासेन वर्णितम्—

'यथा यथा विपर्येति लोकतन्त्रमसारवत्।
तथा तथा विरागोऽत्र जायते नात्र संशयः॥'

इत्यादि बहुशः कथयता।

ततश्च रसान्तरैरुपसर्जनीभूतैरनुगम्यमानः शान्तो रसो महाभारतेऽङ्गी। एवमेव पुरुषार्थान्तरैरनुगम्यमानो मोक्षलक्षणः पुरुषार्थश्च।

यत्तु केषांचित्तत्राङ्गभूतरसस्य स्वप्राधान्येन चारुत्वं भासते, तदात्मतत्त्वमनपेक्ष्य शरीरचारुत्वं पश्यतामिवेत्यविरुद्धम्। वस्तुतत्त्वं विजानतां तु यथात्मैव शरीरे प्रधानं तथा शान्तो रसो मोक्षः पुरुषार्थश्च तत्र तात्पर्यविषय इति सारम्।

ननु महाभारतानुक्रमण्यां नैतद्वियते, प्रत्युत महाभारतस्य सर्वपुरुषार्थबोधकत्वं सर्वरसगर्भत्वं चोक्तमिति चेत्। सत्यम्। नैतत्तत्र शब्देन निवेदितम्, किन्तु व्यङ्ग्यत्वेन दर्शितम्। तथाहि 'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः' इत्यादि वाक्येनेदमेव व्यङ्ग्यत्वेन स्फुटं बोध्यते यत् 'यदिह पाण्डवादिचरितं कीर्त्यते तेन संपत्सु नय-पराक्रमादिगुणेषु चासक्तिं निवर्त्य संसारासारतां पश्यद्भिर्भगवत्येव भावितान्तःकरणैर्भवितव्यम्' इति। अनन्तरश्लोकाश्चात्रैवार्थेऽनुकूलाः। महाभारतावसाने भगवद्भक्तिप्रतिपादकं हरिवंशं वर्णयता च भगवता व्यासेन सोऽयं स्वहृदयस्थितोऽर्थः सम्यक् स्फुटीकृतः। एवं संसारातीते तत्त्वे भक्तिं प्रकाशयता तेन सकलसांसारिकपदार्थानां पूर्वपक्षता विहितेति प्रत्यक्षमेव।

देवतातीर्थतपःप्रभृतिवर्णनमपि तत्र भगवद्विभूतित्वेन तत्प्राप्त्युपायत्वेन च विद्यते, पाण्डवादिचरितस्य च मोक्षमूलवैराग्यजननार्थं वर्णनमस्ति। तेन सर्व-

स्यास्य परब्रह्मप्राप्त्युपायत्वमेव। वासुदेवशब्देन चात्र गीतादिप्रसिद्धं सकलावतारमूलभूतं परब्रह्मैव विवक्षितम्, न तु माथुरप्रादुर्भावांश एव, सनातनशब्दविशेषितत्वात्। रामायणादिष्वपि वासुदेवशब्देन कपिलादिभगवन्मूर्त्यन्तरवर्णनं श्रूयते। कैयटादिभिः शब्दतत्त्वविद्भिरप्ययमर्थः शब्दनित्यत्वसाधनेन स्वीकृत एव।

तदेवं शास्त्रत्वदृष्ट्या मोक्षपुरुषार्थस्य, काव्यत्वदृष्ट्या च शान्तरसस्य तत्राङ्गित्वमिति सिद्धम्। अत्यन्तसारभूतत्वात्त्वयमर्थो व्यङ्ग्यत्वेन दर्शितो, न तु वाच्यत्वेन, सारभूतार्थस्य व्यङ्ग्यत्व एव शोभाजनकत्वात्। प्रसिद्धं चैतद् विदग्धविद्वत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेनैव प्रकाश्यत इति।

तस्मादङ्गीभूतमेकं रसादिकमाश्रित्य क्रियमाणे काव्ये नवनवार्थलाभो बन्धचारुत्वं च भवतीति सिद्धम्।

## अनलंकृतस्यापि रसानुगुणार्थस्य शोभाधायित्वम्

अतएवालङ्कारान्तरविरहेऽपि रसानुगुणार्थनिबन्धनं शोभातिशयाधायि भवति। यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥

इत्यत्र चुलुके मत्स्यकच्छपदर्शनमद्भुतरसानुगुणत्वाच्छायातिशयपोषकम्। यद्यप्येकचुलुके जलधिसंनिधानमपि महाश्चर्यजनकम्, तथापि सर्वलोकप्रसिद्धत्वात्, पूर्वक्षुण्णस्य चाश्चर्यजनकतातिरोधानात्, इदमक्षुण्णमद्भुतरसस्याधिकमनुगुणम्।

न चाक्षुण्णं वस्तु अद्भुतरसस्यैवानुगुणम्, किन्तु रसान्तरस्यापि। यथा—

सिज्जइ रोमञ्चिज्जइ वेवइ रत्थातुलग्गपडिलग्गो।
सो पासो अज्ज वि सुहअ जेणासि वोलीणो॥
( स्विद्यति रोमाञ्चते वेपते रथ्यातुलाग्रप्रतिलग्नः।
स पार्श्वोऽद्यापि सुभग येनासि व्यतिक्रान्तः॥ )

एतद्गाथार्थभावने रथ्यायाः पार्श्वस्पर्शेन स्वेदादिजनने या रसप्रतीतिर्भवति, न सा व्यङ्ग्यस्वेदादिबोधेन जायते, तादृग्वर्णनस्य सर्वक्षुण्णत्वात्, अस्यैव चार्थस्यात्रापूर्वत्वेनाभिनिवेशात्।

तदेवं ध्वनिप्रभेदसमाश्रयणेन काव्यानां नवनवत्वं प्रतिपादितम्। एवमेव गुणीभूतव्यङ्ग्यप्रकाराश्रयणेऽपि तद्भवति, विस्तरभिया तु नोदाहृतम्। स्वयमुत्प्रेक्षणीयम्।

## प्रतिभामाहात्म्यम्

तदेवं सत्स्वपि पुरातननिबन्धेषु—

ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात्।
न काव्यार्थविरोधोऽस्ति यदि स्यात् प्रतिभागुणः ॥ ६ ॥

तदसत्वे तु न किञ्चिदेव कवेर्वस्त्वस्ति वर्णनीयम् ।

रचनाचमत्कारोऽपि ध्वनि--गुणीभूतव्यङ्ग्यरूपार्थद्वयानुरूपशब्दसंनिवेशेनैव, नान्यथा। अर्थविशेषमनपेक्ष्य केवलाक्षररचनैव काव्यशोभाजनिकेति मतं तु सहृदयबुद्ध्यगोचरः, अन्यथा कोमलाक्षरमालामात्रेऽपि काव्यसंज्ञा प्रवर्तेत ।

तर्हि व्यङ्ग्यानपेक्षिशब्दचित्रे कथं काव्यत्वव्यवहार इति चेत्, यथा कस्यचित् पुरातनकवेः पद्यार्थानुकरणेन पद्यान्तरनिर्माणे अयथार्थ( नकली )काव्यत्वम् , तथैव तत्राप्यनुकरणमात्रेण काव्यत्वम् ।

## वाच्यार्थापेक्षयाऽपि अर्थानन्त्यम्

न चेदमर्थानन्त्यं व्यङ्ग्यार्थसमाश्रयणेनैव, किन्तु केवलवाच्यार्थापेक्षयाऽपि भवति—

अवस्थादेशकालादिविशेषैरपि जायते ।
आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः ॥ ७ ॥

स्वभावो ह्ययं वाच्यानां चेतनाचेतनानां यत् (१) अवस्थाभेदात्, (२) देशभेदात्, (३) कालभेदात्, (४) स्वरूपभेदाच्चैकस्यैव वस्तुनोऽनन्तता संभवति । तेन स्वभावोक्त्या निबध्यमानैरपि वस्तुभिर्भिन्न-भिन्नस्वभावानुसरणेन निरवधिः काव्यार्थः संपद्यते । तत्र हि—

( १ ) अवस्थाभेदेन नानात्वं यथा—कुमारसंभवे भगवत्याः पार्वत्याः रूपवर्णनं, 'सर्वोपमाद्रव्यसमुच्चयेने'त्यादिभिरारम्भे, 'वसन्तपुष्पाभरणं वहन्ती' इत्यादिभिः कामदहनात् प्राक् शम्भुपरिचर्यायाम्, 'तां प्राङ्मुखीं तत्र निवेश्य तन्वीम्' इत्यादिभिर्विवाहसमये च कृतम् , किन्तु तदेकस्या एकस्मिन्नपि काव्ये वर्णनम् अवस्थाभेदेन भङ्ग्यन्तरसंनिवेशितं न मनागपि पुनरुक्तत्वेन भासते । अतएव विषमबाणलीलायामुक्तम्—

ण अ ताण घडइ ओही ण अ ते दीसन्ति कहँ वि पुनरुत्ता।
जे विब्भमा पियाणं अत्था वा सुकइवाणीणम् ॥
( न च तेषां बटतेऽवधिः न च ते दृश्यन्ते कथमपि पुनरुक्ताः।
ये विभ्रमाः प्रियाणामर्था वा सुकविवाणीनाम् ॥ ) इति।

अयमपरश्चावस्थाभेदप्रकारः—हिमवद्गङ्गादीनामचेतनानामभिमानित्वेन प्रसिद्धं द्वितीयं रूपमपि श्रूयते, तच्चैकत्र पर्वतादिरूपेण परत्र तु पुरुषादिरूपेण वर्ण्यमानमन्यदेव संपद्यते। यथा कुमारसंभवे प्रथमसर्गे पर्वतरूपेण हिमवतो वर्णनम्, सप्तर्षिसंवादादिषु च पुरुषरूपेण। बाल्याद्यवस्थाभेदभिन्नत्वं च चेतनानां प्रसिद्धमेव।

एकस्यामवस्थायामप्यवान्तरावस्थाभेदान्नानात्वम्। यथा कुमारीणामविदितमदनविकाराणामुद्भिन्नमदनविकाराणां च, तत्रापि कुलशीलादिमतीनां, उच्छृङ्खलानां चेत्यादि।

एवमचेतनानामप्यारम्भाद्यवस्थाभेदेन स्वरूपानन्त्यम्। यथा—

हंसानां निनदेषु यैः कवलितैरासज्यते कूजता-
मन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो विभ्रमः।
ते सम्प्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्धिनो
निर्याताः कमलाकरेषु बिसिनीकन्दाग्रिमग्रन्थयः ॥

अत्र हि बिसवर्णनस्य बहुधा कृतत्वेऽप्यारम्भावस्थावर्णनमपूर्वमेव। सेयं दिक्।

( २ ) देशभेदान्नानात्वं च वायुसलिलकुसुमादीनामचेतनानाम्, ग्रामारण्यसलिलादिसमेधितानां मानुषपशुपक्षिप्रभृतीनां चेतनानां च प्रत्यक्षमेव लक्ष्यते। तथाहि मानुषाणामेव दिग्देशादिभिन्नानां व्यवहारव्यापारादिषु ये विचित्रा विशेषास्तेषां केनान्तः शक्यते गन्तुम्, विशेषतो योषिताम्।

( ३ ) कालभेदाच्च नानात्वम्—यथर्तुभेदाद्दिग्व्योमसलिलादीनामचेतनानाम्, चेतनानां चौत्सुक्यादयः कालविशेषकृताः प्रसिद्धा एव।

( ४ ) वस्तुस्वरूपभेदस्तु सुप्रसिद्ध एव। तादृशभेदेन भिन्नानां वस्तूनां वर्णनेनाप्यनन्तता काव्यार्थस्य भवति।

## अभिनवत्वप्रतीतेर्भ्रमत्वनिरासः

अत्राशङ्क्यते—कविभिर्हि स्वयमनुभूतानां सुखादीनां तन्निमित्तानां च ऋतुमाल्यादीनां स्वरूपमन्यत्रारोपयद्भिः काव्ये सामान्यमात्रेण वस्तून्युपनिबध्यन्ते।

नहि तैर्योगिभिरिव त्रैकालिकं परचित्तवर्ति च वस्तु प्रत्यक्षीक्रियते। तत् स्व-पर-चित्तवर्त्तित्वसामान्येनोपनिबध्यमानं वस्तु पुरातनैः कविभिर्वर्णितमेव। तदेव चाद्यतनैर्वर्ण्यते। तेन नास्त्यक्षुण्णत्वं कुत्रापि। एवं चोक्तिवैचित्र्यमात्रं तत्रास्ति, अभिनवत्वप्रतीतिस्तु भ्रममात्रमेव।

तत्रोच्यते—सामान्यमात्राश्रयेण काव्यप्रवृत्तिः, तस्य च प्रागेव गोचरीकृतत्वान्नास्ति नवत्वमिति यदुक्तं तदयुक्तम्। पूर्वनिर्दर्शितवस्त्वादिभेदस्यानुभवगोचरस्यापलापापत्तेः, महाकविनिबन्धानां व्यर्थत्वापत्तेश्च। एवं सति वाल्मीकिव्यतिरिक्तानां सर्वेषां कवित्वमेव न स्यात्, सामान्यातिरिक्तस्य काव्यार्थत्वाभावात्, सामान्यस्य च तेनैव प्रदर्शितत्वात्।

उक्तिवैचित्र्यान्नैष दोष इति चेत्। उच्यते। वाच्यवैचित्र्याभावे उक्तिवैचित्र्यासंभवः। वाच्यविशेषप्रतिपादनस्यवोक्तिवैचित्र्यशब्दवाच्यत्वात्। तदयमत्र संक्षेपः—

**वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित्।**
**इष्यते प्रतिभार्थेषु तत्तदानन्त्यमक्षतम्॥**

किंचोक्तिवैचित्र्येण पूर्वं प्रदर्शितस्यावस्थादिभेदभिन्नस्य काव्यपदार्थस्य पुनरपि भूयांसः प्रकाराः संभवन्ति, यथोपमादीनां विविधभङ्गीनिर्वर्णने। तेन काव्यार्थानन्त्ये तद् वस्तुवैचित्र्यं प्रत्युतानुगुणमेवास्माकम्। भाषाभेदेन भणितिभेदश्चाप्युक्तिवैचित्र्यरूपस्तत्तत्पदार्थानां तत्तद्भाषया निबन्धने विचित्रतां दर्शयन् काव्यार्थानन्त्यं संपादयति। तेन सिद्धमिदम्—

**अवस्थादिविभिन्नानां वाच्यार्थानां निबन्धनम्।**
**भूम्नैव दृश्यते लक्ष्ये तत्तु भाति रसाश्रयात्॥ ८॥**

वाच्यार्थनिबन्धनस्य च रसाश्रयेणैव शोभाजननादिदमत्र बोध्यं सत्कविभिः—

**रसभावादिसंबद्धा यद्यौचित्यानुसारिणी।**
**अन्वीयते वस्तुगतिर्देशकालादिभेदिनी॥ ९॥**
**वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।**
**निबद्धा सा क्षयं नैति प्रकृतिर्जगतामिव॥ १०॥**

यथा जगत्प्रकृतिविषये 'इदानीं परिक्षीणा पदार्थनिर्माणशक्ति'रिति न शक्यते वक्तुम्, तथैव काव्यस्थितिरपि न परिहीयते, प्रत्युत नवनवाभिर्व्युत्पत्तिभिर्वर्धते एव।

## संवादस्यादोषता

संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम् ।
नैकरूपतया सर्वे ते मन्तव्या विपश्चिता ॥ ११ ॥
संवादो ह्यन्यसादृश्यं तत्पुनः प्रतिबिम्बवत् ।
आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम् ॥ १२ ॥

संवादमात्रेण तु कविद्वयनिरूपितपदार्थानामेकरूपता न मन्तव्या । संवादो हि सादृश्यम् । तत् त्रिधा–प्रतिबिम्बवत्, चित्रवत्, तुल्यदेहिवच्च ।

तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम् ।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः ॥ १३ ॥

तत्र चित्रप्रतिबिम्बयोरिव सादृश्यं त्याज्यम्, अनुकरणमात्रत्वात् । प्रतिबिम्बस्य अनन्यरूपत्वेन तात्त्विकशरीरशून्यत्वात् । चित्रस्य तु शरीरान्तरयुक्तस्यापि तुच्छात्मत्वात् ।

तृतीयं तु न त्याज्यम्, न हि शरीरी शरीरिणा सदृशोऽपि एक एवेति शक्यते वक्तुम् । एतदेवोपपादयितुमुच्यते—

आत्मनोऽन्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ।
वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥ १४ ॥

तेन पूर्ववर्णितेऽपि वस्तुनि काव्यात्मनो व्यङ्ग्यस्य भेदे सति चन्द्रानुकारिणि वदन इव न पुनरुक्तता, शरीरसादृश्येऽप्यात्मभेदात् ।

अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी ।
नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति ॥ १५ ॥

तेन यथा तान्येवाक्षराणि पदानि च वाल्मीक्याद्युच्चारितानि सांप्रतमपि निबध्यमानानि नूतनतां न विरुन्धन्ति तथैव काव्यपदार्था अपि व्यङ्ग्यभेदेन निबध्यमाना न विरुन्धन्ति नवताम् । तदिदं तत्त्वम्—

यदपि तदपि रम्यं यत्र लोकस्य किञ्चित्
स्फुरितमिदमितीयं बुद्धिरभ्युज्जिहीते ।
अनुगतमपि पूर्वच्छायया वस्तु तादृक्
सुकविरुपनिबध्नन् निन्द्यतां नोपयाति ॥ १६ ॥

तेन यत्र लोकस्य 'रम्यं स्फुरितमिदम्' इति बुद्धिस्तादृशं पूर्ववर्णितमप्यर्थं प्रसादपूर्णया शब्दरचनया निबध्नन् सुकविर्नोपयाति निन्द्यताम् ।

तदित्थं स्थिते—

प्रतायन्तां वाचो निमितविविधार्थामृतरसा
न वादः कर्त्तव्यः कविभिरनवद्ये स्वविषये ।
परस्वादानेच्छाविरतमनसो वस्तु सुकवेः
सरस्वत्येवैषा घटयति यथेष्टं भगवती ॥ १७ ॥

एतदेव हि महाकवित्वं कवीनाम् ।

इत्यक्लिष्टरसाश्रयोचितगुणालङ्कारशोभाभृतो
यस्माद्वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते ।
काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः
सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम् ॥

यस्मात्=काव्याख्यादुद्यानात् । सर्वं समीहितं वस्तु=व्युत्पत्तिकीर्त्तिप्रीतिलक्षणम् ।

सत्काव्यतत्त्वनयवर्त्म चिरप्रसुप्त-
कल्पं मनस्सु परिपक्वधियां यदासीत् ।
तद् व्याकरोत् सहृदयोदयलाभहेतो-
रानन्दवर्धन इतिप्रथिताभिधानः ॥

इत्थमिदं प्राक्तनविदुषां स्फुरितमपि प्रसुप्तं ध्वनितत्त्वमानन्दवर्धनेन निर्णीतम् ।

॥ इति ॥

अस्ति स्वस्तिमयप्रशस्तिविदिता मुम्बापुरी मोहिनी
तस्यामप्यतिसुन्दरं शिशुहरेर्मान्य महन्मन्दिरम् ।
श्रीमद्गोकुलनाथदेशिकवरः श्रीवल्लभाचार्यस-
द्वंशाम्भोनिधिकौस्तुभो विजयते तत्राश्रयः सद्विदाम् ॥
तज्ज्येष्ठतनयश्रीमत्कृष्णजीवनशर्मणः ।
प्रीत्यै प्रणीतः सारः स्याद् ध्वन्यालोकस्य सन्मुदे ।

---

१ काव्यं हि अक्लिष्टा रसाश्रयेण उचिता ये गुणालङ्कारास्तैः शोभां बिभर्त्ति; उद्यानमपि अक्लिष्टः कालोचितो यो रसः सेकादिकृतस्तदाश्रयेणोचितानां सौकुमार्यच्छायावत्त्वसौगन्ध्यादिगुणानामलङ्कारः पर्याप्तिस्तेन शोभां बिभर्त्ति, तादृशात् ।

२ श्री बालकृष्णस्य ।

# ध्वन्यालोककारिकार्धसूची

# उदाहरणपद्यानां सूची

# शुद्धिपत्रम्

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ९ | भ्रमधार्मिकः | भ्रम धार्मिक |
| ४ | टि. १ | यव्यङ्गम् | व्यङ्ग्यम् |
| ७ | टि. १ | भुञ्ज्म हे'ति | भुञ्जमहे'इति |
| १० | २० | नासौ लक्षणया प्रतिपादयितुं सुशकः | न तल्लक्षणया प्रतिपादयितुं सुशकम् |
| १३ | टि. १ | गुणीभूतव्यङ्गत्वमेव | गुणीभूतव्यङ्ग्यत्वमेव |
| १८ | २७ | भूयौ | भूयो |
| २१ | १८ | सलेशमवताद्गोष्ठ | सलेशमवताद् गोष्ठे |
| २१ | २१ | संहारव्रजृम्भत | संहरव्रजृम्भत |
| २४ | २४ | सज्जेहि | सज्जेहि |
| २५ | ७ | पिवति | पिबति |
| ३२ | ९ | सततः | सप्तैताः |
| ३३-३५-३७-३९ ४१-४३-४५-४७ ४९-५१-५३-५५ ५७-५९-६१-६३ पृष्ठेषु सर्वोपरि | | द्वितीयोद्द्योतः | तृतीयोद्द्योतः |
| ३५ | १० | इत्यनेन | इत्यनेन । |
| ३८ | २४ | झटित्यवभासते | झटित्येव भासते |
| ५० | ८ | रसभावादयस्तदानी' | रसभावादयस्तदज्ञानी' |
| ,, | १० | ईदश | ईदृश |
| ५२ | ७ | निह्नतिपरः | निह्नुतिपरः |
| ५५ | १ | तुन | तु न |
| ,, | २१ | एवं | एवं- |
| ६३ | २३ | आरोपि तत्वात् | आरोपितत्वात् |

| | | | |
|---|---|---|---|
| ६५ | ४ | अविनाभूम् | अविनाभूतम् |
| ,, | २१ | मीतध्वनीनां | गीतध्वनीनां |
| ७१ | ६ | धार्तराष्ट्रा | धार्तराष्ट्रा |
| ८१ | २३ | सुचिर | सुचिरं |
| ८३ | १६ | करण्डश्च | करण्डश्चं |
| ८७ | १२ | कवलित | कवलितै |
| ,, | १६ | वणन | वर्णन |
| ,, | २४ | काव्याथस्य | काव्यार्थस्य |
| ८८ | २ | उपनिध्यमानं | उपनिबध्यमानं |
| ,, | ११ | प्रतिपादनस्यवो० | प्रतिपादनस्यैवो० |
| ,, | १३ | प्रतिभाथेषु | प्रतिभार्थेषु |
| ,, | २७ | काव्य स्थति | काव्यस्थिति |
| ८९ | ९ | तृतीय | तृतीयं |
| ,, | १४ | तुच्यते | तुमुच्यते |
| ९० | २० | वल्लभाचाय | वल्लभाचार्य |

इतः परमपि यत्र कुत्रचिद्रेफमात्रादीनां मुद्रणसमये लोपाद् याः काश्चनाशुद्धयो दृश्येरंस्ताः, यत्र तत्र पदच्छेदाद्यशुद्धयश्च यद्युपलभ्येरंस्तर्हि ताश्च विद्वद्वरैर्दयया संशोध्य पठनीयाः ।

Sbaunsthoasnh 24. 11. 50

Sbaunsthoasnh

SBAUNSTHOASNH

---

प्राप्तिस्थानम्

चौखम्बा-संस्कृत-पुस्तकालय,

पो० बाक्स नं० ८, बनारस-१